# फिट्सूत्रशब्दकोशः



अङ्कु ५२.
अक्ष ३५.
अक्षर ६९.
अक्षुपूर्व ४३.
अङ्गुष्ठ १४.
अण्यन्त ५६.
अथ २४, ५०.
अथर्वन् ७९.
अदन्त २९.
अद्रिगाख्या १८.
अदेवन ३५.
अधान्य ७६.
अधू ७२.
अनि ५६.
अनिसन्त २६.
अनुच्च ७८.
अनुदात्त ८४, ८७.
अनृत् ३४.
अन्त १, १४, ४२, ७६, ७९, ८२.
अन्त्य ६२
अपत्य ६७.
अपालङ्क २.
अब्विषय १९.
अभिवर्ज ८१.
अमृगाख्या ११.
अम्बा २.
अरण्य ६७.
अर्जुन १६.
अर्ध ३६.
अलघु ६३.
अश्मादि ६.
अषाढ ६८.
अषान्त ४७.
असंयुक्तलान्त ४८.
असमद्योतन ३६.
अस्त्री ३.
आदि ९, १३, २४, ५७, ६६, ७५.
आद्युदात्त ८०.
आर्जि ५७.
आर्य १७.
आशा १८.
इक्षु ५७.
इगन्त ४९.
इति ७८, ८५.
इष्टकाख्या ६८.
ईष ५०.
ईषान्त ६६.
उदक १४.
उदान्त १, ७९, ८३.
उदुम्बर ६४.
उन ३२.
उपमेयनामधेय ३९.
उपसर्ग ८१.
उपोत्तमवर्जम् ७१.
उर्मी ८३.
उवर्ण ३१.
उशीर ६७.
उष्ट्रार ६४.

ऋ ३२.
ऋतु ४५.
एवादि ८२.
क ४६.
कनिष्ठ २२.
कन्या ७६.
कपाल ६७.
कपिकेश ७३.
कर्दमादि ५९.
काम्पिल्य ६५.
कालघाल ७२.
काशी ५७.
काश्मर्य ७६.
काष्ठा ५७.
कुपूर्व २०, ३०.
कृत्तिकाख्या २०
कृत्रिमाख्या ३१.
कृष्ण ११.
खय् ३१.
खान्त ६.
गुद ४.
गुरु ४२.
गुर्वादि ५५.
गेहार्थ ३.
गोष्ठज ७०.
गौर १३.
ग्रामादि ३८.
घृतादि २१.
च ४, १०, १५, २१, २७, ३८, ४२. ४४, ४६, ४९, ५३, ५८, ५९, ६३, ६४, ८१.
चादि ८४
चेत् ११, १६, १७, १८, २०, ३१, ४१, ६८.
छन्दस् १०, १४, ५८, ७३, ७७.
जनपदशब्द ४७.
जल ७२.
जाया ६८.
ज्येष्ठ २२.
ण ३३.
त ३३.
ताच्छील्य ३४.
तान्त ३३.
ति ७, ३३.
तिल्य ७६.
तिष्य २३
तृणधान्य २७.
तृणाख्या १६.
त्र्यच् ५१.
ते ६०.
त्व ७८.
त्वत् ७८.
थान्त ६३.
थान्त ७.
दक्षिण ८.
दार्वाघाट ६५.
दाशेर ६७.
देवर ६७.
द्राक्षाक ५७.
द्वि ४२.
द्वितीय ५०.
द्विष् २७.
द्युष् ४९.
घ् ५.
धान्य ४६.
धूम्रजानु ७२.
न् २८.
न २०, ४०, ४५, ६३.
नक्षत्र १९.
नप् ६१.
नविषय २६.
नामधेय १२.
नासिक्य ६५.
नि ३३.
निपात ८०.
न्यङ्क ७४.

न्यर्बुद ७५.
पर्याय ६९.
पर्वतविशेष ४०.
पलाल ६७.
पाटला २.
पादान्त ८५.
पान्त ५५.
पारावत ७१.
पारेवत ५७.
पीतद्र्वर्थ ( पीतद्रु-अर्थ ) ३७.
पुरूरवस् ६४.
पूर्व ४४; ६२.
पृष्ठ १५.
पेश्वा ५७.
प्रकाराद्विरुक्ति ८६.
प्राच् २४, ५०, ५१.
प्राणिन् ३०.
प्राण्याख्या ४५.
फलान्त ६१.
फिष् १.
बंहिष्ठ ७.
बक १४.
बलीवर्द ६४.
बह्वष् ४२.
बिल्व २३, ७७.
ब्राह्मणनामधेय ७८.
भक्ष्य ७७.
मकर ५१, ५७.
मत्य ७६.
मनुष्य ७६.
महिष ४०.
महिषी ६८.
मावि ५३.
मुञ्जकेश ७२.
यथा ८५.
यपूर्व ५
यमन्वन् ४१.
यान्त ६२.
युत ५६.
र् २८, ५२.
राजन्य ७६.
राजविशेष ४१.
लघु ४२, ४४.
लुबन्त ३९.
लोमन् ५७.
वत्सर ७.
वन्नन्त ३२.
वयस् २२.
वरूढ ५७.
वर्ण ३३. ४३.
वश १४.
वा ९, १२, ५७, ५७, ६०, ६६.
वाचादि ८३.
वादि ५२.
वितस्ता ५७.
वीर्य ७७.
वृक्ष ४०.
वृद्ध ४६.
व्यल्कश ७५.
व्याघ्र ४०.
शकटि २४. ५९.
शकटी ६९.
शकुनि ४४.
शत् ७.
शराव ६७.
शाक ५४.
शादि ५४.
शारीर ६७.
शिक्य ७६.
शिट् २९.
शिशुमार ६४.
शुक्र १३.

शेष ८७.
शैवाल ६७.
श्यामाक ६७.
षान्त ४६.
संख्या २८.
सम ७८.
सर्व ८७.
सागरार्थ २.
सांकाश्य ६५.
साधु ८.
सिंह ४०.
सिम ७९.
सुगन्धितेजन ६०.
स्त्रीविषय ५, २५.
स्त्रीविषय ४३.
स्थलस्थ ७२.
स्थालीपाक ७२.
स्वर ७४.
स्वरित २३, ७४.
स्वाङ्ग २९, ५२.
स्वाङ्गाख्या ९.
स्वाम्याख्या १७.
हयादि ४८, ६६.
हरिकेश ७३.
हिरण्य ६७.
हृदय ६७.
ह्रस्व ३४.
ह्रस्वान्त २५, ३४

# अष्टाध्यायीसूत्रपाठः।

## सवार्तिकः

१ सिद्धे शब्दार्थसंबन्धे लोकतोर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु ।
२ अस्त्यप्रयुक्त इति चेन्नार्थे शब्दप्रयोगात्।
३ अप्रयोगः प्रयोगान्यत्वात् ।
४ अप्रयुक्ते दीर्घसत्रवत्।
५ सर्वे देशान्तरे ।
६ ज्ञाने धर्म इति चेत्तथाधर्मः ।
७ आचारे नियमः ।
८ प्रयोगे सर्वलोकस्य ।
९ शास्त्रपूर्वकेप्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ।
१० सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः ।
११ शब्दाप्रतिपत्तिः ।
१२ शब्दे ल्युडर्थः ।
१३ भवे प्रोक्तादयश्च तद्धिताः ।
१४ लक्ष्यलक्षणे व्याकरणम् ।
१५ वृत्तिसमवायार्थ उपदेशः ।
१६ अनुबन्धकरणार्थश्च ।
१७ इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ।
१८ आकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेधः ।

अइउण् १ ।

१ अकारस्य विवृतोपदेश आकारग्रहणार्थः।
२ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ।
३ दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः[४] ।
४ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्।
५ एकत्वादकारस्य सिद्धम् ।
६ अनुबन्धसंकरस्तु ।
७ एकाजनेकाज्ग्रहणेषु चानुपपत्तिः ।
८ द्रव्यवच्चोपचाराः ।
९ विषयेण तु नानालिङ्गकरणात् सिद्धम् ।
१० एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात्।
११ आन्यभाव्यं तु कालशब्दव्यवायात् ।
१२ युगपच्च देशपृथक्त्वदर्शनात् ।
१३ आकृतिग्रहणात्सिद्धम् ।
१४ तद्वच्च तपरकरणम् ।
१५ हल्ग्रहणेषु च ।

१ लोकतः इत्यधिकं प. पुस्तके । २ भवे च तद्धित इति प. पुस्तके ।३ प. पुस्तके इतः परमधिकम् 'लिङ्गार्थां तु प्रत्यापत्तिः । ४ प. पुस्तके इतः परमधिकं स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् ।

१६ रूपसामान्याद्वा ।

ऋलृक् २ ।

१ लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुताद्यर्थः ।

२ न्याय्यभावात्कल्पनं संज्ञादिषु ।

३ अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु ।

४ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ।

५ रवत्प्रतिषेधाच्च ।

एओङ् ३ ।

ऐऔच् ४ ।

१ संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ।

२ प्लुत्यादिष्वज्विधिः ।

३ प्लुतसंज्ञा च ।

४ अतपर एच इग्घ्रस्वादेशे ।

५ एकादेशे दीर्घग्रहणम् ।

६ वर्णैकदेशा वर्णग्रहणेन चेत् संध्यक्षरे समानाक्षरविधिप्रतिषेधः ।

७ दीर्घे ह्रस्वविधिप्रतिषेधः ।

८ एकवर्णवच्च ।

९ नाव्यपवृक्तस्यावयवे तद्विधिर्यथा द्रव्येषु ।

१० संध्यक्षरेषु विवृतत्वात् ।

११ अग्रहणं चेन्नुट्विधिलादेशविनामेष्वृकारग्रहणम् ।

१२ प्लुतावैच इदुतौ ।

१३ तुल्यरूपे संयोगे द्विव्यञ्जनविधिः ।

हयवरट् ५ ।

१ हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणम् ।

२ उत्त्वे च ।

३ पूर्वोपदेशे किस्त्वकृसेड्विधयो झल्ग्रहणानि च ।

४ रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपसवर्णप्रतिषेधः ।

५ पूर्वोपदेशे किस्त्वप्रतिषेधो व्यलोपवचनं च ।

६ अयोगवाहानामट्सु णत्वम् ।

७ शर्षु जश्भावषत्वे ।

८ अविशेषेण संयोगोपधासंज्ञालोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः ।

९ अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ।

१० वर्णव्यत्यये चार्थान्तरगमनात् ।

११ वर्णानुपलब्धौ चानर्थगतेः ।

१२ संघातार्थवत्त्वाच्च ।

१३ संघातस्यैकार्थ्यात्सुबभावो वर्णात् ।

१४ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः ।

१५ वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् ।

लण्[१] ६ ।

---

१ प. पुस्तके इतः परमधिकम् । प्रत्याहारानुबन्धानां कथमज्ग्रहणेषु न । आचाराद्प्रधानत्वात् लोपश्च बलवत्तरः । ऊकालोजिति वा योगस्तत्कालानां यथा भवेत् । अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥ अनुवर्तते विभाषा शरोचि यद्वारयत्ययं द्वित्वम् । नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् । २ सवर्णेन, तपरं ह्यूर्कइवारेन्यत्र परेणेण् स्यात् ।

**अमङणनम् ७ ।**

**झभञ् ८ ।**

**घढधष् ९ ।**

**जबगडदश् १० ।**

**खफछठथचटतव् ११ ।**

**कपय् १२ ।**

**शषसर् १३ ।**

**हल् १४ ।**

**वृद्धिरादैच् ॥ १ ॥**

१ संज्ञाधिकारः संज्ञासंप्रत्ययार्थः ।

२ इतरथा ह्यसंप्रत्ययो यथा लोके ।

३ संज्ञासंज्ञ्यसंदेहश्च ।

४ आचार्याचारात्संज्ञासिद्धिः यथा लौकिकवैदिकेषु ।

५ संज्ञासंज्ञ्यसंदेहश्च ।

६ अनाकृतिः ।

७ लिङ्गेन वा ।

८ सतो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः ।

९ सिद्धं तु नित्यशब्दत्वात् ।

१० किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ।

११ अन्यत्र सहवचनात्समुदाये संज्ञाप्रसङ्गः ।

१२ प्रत्यवयवं च वाक्यपरिसमाप्तेः ।

१३ आकारस्य तपरकरणं सवर्णार्थं ।
भेदकत्वात्स्वरस्य

**अदेङ् गुणः ॥ २ ॥**

**इको गुणवृद्धी ॥ ३ ॥**

१ इग्ग्रहणमात्संध्यक्षरव्यञ्जननिवृत्त्यर्थम् ।

२ संज्ञया विधाने नियमः ।

३ वृद्धिगुणावलोऽन्त्यस्येति चेन्मिदिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् ।

४ सर्वादेशप्रसङ्गश्चानिगन्तस्य ।

५ इग्मात्रस्येति चेज्जु [illegible] तुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः ।

६ पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् ।

७ वृद्धिग्रहणमुत्तरार्थम् ।

८ मृज्यर्थमिति चेद्योगविभागात्सिद्धम् ।

९ अंटि चोक्तम् ।

१० वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् ।

११ तस्मादिग्लक्षणा वृद्धिः ।

१२ षष्ठ्याः स्थानेयोगत्वादिग्निवृत्तिः ।

१३ अन्यतरार्थं पुनर्वचनम् ।

१४ प्रसारणे च ।

१५ विषयार्थं पुनर्वचनम् ।

१६ उरण्रपरे च ।

१७ सिद्धं तु षष्ठ्यधिकारे वचनात् ।

**न धातुलोप आर्धधातुके ॥ ४ ॥**

१ यङ्यकयवलोपे प्रतिषेधः ।

२ नुम्लोपस्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् ।

३ इक्प्रकरणान्नुम्लोपे वृद्धिः ।

४ निपातनात्स्यदादिषु ।

---

१ अक्षरं न क्षरं विद्यादश्नोतेर्वा सरोक्षरम् । वर्ण वाहुः पूर्वसूत्रे किमर्थमुपदिश्यते । वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते । तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते २ इतः परमधिकम् । प्रत्येकं गुणवृद्धिसंज्ञे भवतः इति वक्तव्यम् इति प. पुस्तके । ३–४ परत्रपुस्तके नास्ति ।

५ प्रत्ययाश्रयत्वादन्यत्र सिद्धम् ।

६ रकि ज्यः प्रसारणम्[1] ।

७ अल्लोपस्य स्थानिवत्त्वात् । अनारम्भो वा ।

८ उक्तं शेषे ।

**क्क्ङिति च ॥ ५ ॥**

१ ङ्किति प्रतिषेधे तन्निमित्तग्रहणम् ।

२ उपधारोरवीत्यर्थम् ।

३ श्‍चङन्तस्यान्तरङ्गलक्षणत्वात् ।

४ तद्धितकाम्योरिक्प्रकरणात् ।

५ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम् ।

**दीधीवेवीटाम् ॥ ६ ॥**

१ दीधीवेव्योश्छन्दोविषयत्वाद्दृष्टानुविधित्वाच्च च्छन्दसोऽदीधेदवीधयुरिति च गुणदर्शनादप्रतिषेधः ।

२ दीध्यदिति च श्यन् व्यत्ययेन ।

**हलोऽनन्तराः संयोगः ॥ ७ ॥**

१ संयोगसंज्ञायांसहवचनं यथान्यत्र ।

२ समुदाये संयोगादिलोपो मस्जेः ।

३ द्वयोर्हलोः संयोग इति चेद्द्विर्वचनम् ।

४ न वाज्विधेः ।

५ स्वरानन्तर्हितवचनम् ।

६ दृष्टमानन्तर्यं व्यवहितेऽपि ।

७ आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् ।

८ न[2] वातज्जातीयव्यवायात्[3] ।

**मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥**

१ अनुनासिकसंज्ञायामितरेतराश्रय उक्तम् ।

**तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥**

१ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात्[4][5] ।

२ सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ।

३ तस्यावचनं वचनप्रामाण्यात् ।

४ संबन्धिशब्दैर्वा तुल्यम् ।

५ ऋकारऌकारयोः सवर्णविधिः ।

**नाज्झलौ ॥ १० ॥**

१ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् ।

२ तत्र सवर्णलोपे दोषः ।

३ सिद्धमनच्त्वात् ।

४ वाक्यापरिसमाप्तेर्वा ।

**ईदूदेद्द्विवचनं प्रगृह्यम् ॥ ११ ॥**

१ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः ।

२ ईदाद्यन्तमिति चेदेकस्य विधिः ।

३ न वाद्यन्तवत्त्वात् ।

४ ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधः ।

५ सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ।

**अदसो मात् ॥ १२ ॥**

---

१ संप्रसारणमिति प. पुस्तके । २ प. पुस्तके नास्ति । ३ प. °जातीयक । ४ प. पुस्तके नास्ति । ५ प. °साम्यात् ।

१ मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः ।[1]

२ वचनार्थो हि सिद्धे ।

३ विप्रतिषेधाद्वा ।

४ आश्रयात्सिद्धत्वं च यथा रोरुत्वे ।

५ असिद्धे ह्यत्व आद्गुणाप्रसिद्धिः ।

६ उक्तं वा ।[2]

७ तत्र सकि दोषः ।

८ न वा ग्रहणविशेषणत्वात् ।

**शे ॥ १३ ॥**

१ शेऽर्थवद्ग्रहणात् ।

**निपात एकाजनाङ् ॥ १४ ॥**

**ओत् ॥ १५ ॥**

१ ओतश्च्विप्रतिषेधः ।

**संबुद्धौ शाकल्यस्येतावनार्षे ॥१६॥**

**उञः॥ १७ ॥ ऊँ ॥ १८ ॥**

१ उञ इति योगविभागः ।

२ ऊँ वा शाकल्यस्य ।

**ईदूतौ च सप्तम्यर्थे[3] ॥ १९ ॥**

**दाधा घ्वदाप् ॥ २० ॥**

१ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् ।

२ समानशब्दप्रतिषेधः ।

३ समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात् ।

४ अनुपसर्गाद्वा ।

५ न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथान्यत्र ।

६ दीङः प्रतिषेधः स्थाघ्वोरित्त्वे ।

७ दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् ।

८ सिद्धमनुबन्धस्यानेकान्तत्वात् ।

९ पित्प्रतिषेधाद्वा ।

**आद्यन्तवदेकस्मिन् ॥ २१ ॥**

१ सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् ।

२ तत्र व्यपदेशिवद्वचनम् ।

३ एकाचो द्वे प्रथमार्थम् ।

४ षत्वे चादेशसंप्रत्ययार्थम् ।

५ अवचनाल्लोकविज्ञानात्सिद्धम् ।

६ अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन् ।

७ आदिवत्त्वे प्रयोजनं प्रत्ययञ्नित्दाद्युदात्तत्वे ।

८ वलादेरार्धधातुकस्येट् ।

९ यस्मिन्विधिस्तदादित्वे ।

१० अजाद्याट्त्वे ।

११ अन्तवद्द्विवचनान्तप्रगृह्यत्वे ।

१२ मिदचोऽन्त्यात्परः ।

१३ अचोऽन्त्यादि टि ।

१४ अलोऽन्त्यस्य ।

१५ येन विधिस्तदन्तत्वे ।

**तरप्तमपौ घः ॥ २२ ॥**

१ घसंज्ञायां नदीतरे प्रतिषेधः ।

२ घसंज्ञायां नदीतरेऽप्रतिषेधः ।

३ तरब्ग्रहणं ह्यौपदेशिकम् ।

---

१ प. पुस्तके असिद्धत्वादिति नास्ति । २ प. पुस्तके नास्ति । ३ ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् । पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते । वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि । ज्ञापकं स्यात्तदन्तत्वे । इदं प. पुस्तकेऽधिकं वार्तिकत्वेन ।

**बहुगणवतुडति संख्या ॥ २३ ॥**
१ संख्यासंज्ञायां संख्याग्रहणम् ।
२ संख्यासंप्रत्ययार्थम् ।
३ इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथालोके।
४ उत्तरार्थं च ।
५ अध्यर्धग्रहणं च समासकन्विध्यर्थम् ।
६ लुकि चाग्रहणम् ।
७ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः ।
८ अधिकग्रहणं चालुकि समासोत्तरपद-वृद्ध्यर्थम् ।
९ बहुव्रीहौ चाग्रहणम् ।
१० बह्वादीनामग्रहणम् ।

**ष्णान्ता षट् ॥ २४ ॥**
१ षट्संज्ञायामुपदेशवचनम् ।
२ शताद्यष्टनोर्नुम्नुडर्थम् ।
३ उक्तं वा ।

**डति च ॥ २५ ॥**

**क्तक्तवतू निष्ठा ॥ २६ ॥**
१ निष्ठासंज्ञायां समानशब्दप्रतिषेधः ।
२ निष्ठासंज्ञायां समानशब्दाप्रतिषेधः ।
३ अनुबन्धोऽन्यत्वकर इति चेन्न लोपात् ।
४ सिद्धविपर्यासश्च ।
५ कारककालविशेषात्सिद्धम् ।
६ लुङि सिजादिदर्शनात् ।

**सर्वादीनि सर्वनामानि ॥ २७ ॥**
१ सर्वनामसंज्ञायां निपातनाण्णत्वाभावः ।
२ संज्ञोपसर्जनप्रतिषेधः ।
३ पाठात्पर्युदासः पठितानां संज्ञाकरणम् ।
४ सर्वाद्यानन्तर्यकार्यार्थम् ।
५ प्रयोजनं डतरादीनामद्भावे ।
६ त्यदादिविधौ च ।
७ उभस्य सर्वनामत्वेऽकजर्थः ।
८ अन्याभावो द्विवचनटाब्विषयत्वात् ।
९ उभयोऽन्यत्र ।
१० अवचनादापि तत्परविज्ञानमिति चेत्के-ऽपि तुल्यम् ।
११ भवतोऽकच्छेषात्वानि ।

**विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥**

**न बहुव्रीहौ ॥ २९ ॥**
१ प्रतिषेधे भूतपूर्वस्योपसंख्यानम् ।
२ प्रतिषेधे भूतपूर्वस्योपसंख्यानानर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात् ।

**तृतीयासमासे ॥ ३० ॥**

**द्वन्द्वे च ॥ ३१ ॥**

**विभाषा जसि ॥ ३२ ॥**

**प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ३३**

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यव-स्थायामसंज्ञायाम् ॥ ३४ ॥**
१ अवरादीनां च पुनः सूत्रपाठे ग्रहणा-नर्थक्यं गणे पठितत्वात् ।

**स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥**

**अन्तरं बहिर्योगोपसंव्यानयोः ॥३६॥**
१ उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् ।
२ न वा शाटकयुगाद्यर्थम् ।

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् अपुरीति वक्तव्यम् । ' गणसूत्र एतत्कर्तव्य- ' इति कैयटः ।

३ वाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ।

**स्वरादिनिपातमव्ययम् ॥ ३७ ॥**

**तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥**

१ असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानम् ।

२ सर्वविभक्तिर्ह्यविशेषात् ।

३ त्रलादीनां चोपसंख्यानम् ।

४ अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः ।

५ अलिङ्गमसंख्यमिति वा ।

६ सिद्धं तु पाठात् ।

**कृन्मेजन्तः ॥ ३९ ॥**

१ कृन्मेजन्तश्चानिकारोकारप्रकृतिः ।

२ अनन्यप्रकृतिरिति वा ।

३ न वा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।

४ प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम् ।

५ नलोपो वृत्रहभिः ।

६ उदुपधत्वमकित्त्वस्य निकुचिते ।

७ नाभावो यञि दीर्घत्वस्यामुना ।

८ आत्त्वं कित्त्वस्योपादास्त ।

९ तिसृचतसृत्वं ङीब्विधेः ।

१० तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य ।

११ आत्त्वं पुग्विधेः क्रापयति ।

१२ पुग्घ्रस्वत्वस्यादीदपत् ।

१३ त्यदाद्यकारष्टाब्विधेः ।

१४ इड्विधिराकारलोपस्य पपिवान् ।

१५ मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ।

१६ नदीह्रस्वत्वं संबुद्धिलोपस्य ।

**क्त्वातोसुन्कसुनः ॥ ४० ॥**

**अव्ययीभावश्च ॥ ४१ ॥**

१ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुग्मुखस्वरोपचाराः ।

**शि सर्वनामस्थानम् ॥ ४२ ॥**

**सुडनपुंसकस्य ॥ ४३ ॥**

१ शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः[1] ।

**न वेति विभाषा ॥ ४४ ॥**

१ न वेति विभाषायामर्थसंज्ञाकरणम् ।

२ शब्दसंज्ञायां ह्यर्थासंप्रत्ययो यथान्यत्र ।

३ इतिकरणोऽर्थनिर्देशार्थः ।

४ समानशब्दप्रतिषेधः ।

५ न वा विधिपूर्वकत्वात्प्रतिषेधसंप्रत्ययो यथा लोके ।

६ विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् ।

७ सिद्धं तु प्रसज्यप्रतिषेधात् ।

८ विप्रतिषिद्धं तु ।

९ न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् ।

१० विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिः ।

११ भवतीति चेन्न प्रतिषेधः ।

१२ नेति चेन्न विधिः ।

१३ सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् ।

१४ साध्वनुशासनेऽस्मिन्यस्य विभाषा तस्य साधुत्वम् ।

१५ द्वैधाप्रतिपत्तिः ।

१६ कार्ये युगपदन्वाचययौगपद्यम् ।

१ इतःपरमाधिकं प. पुस्तके वार्तिकद्वयम् । नप्रतिषेधात् अप्राप्तिर्वा ।

१७ आचार्यदेशशीलने च तद्विषयता ।

१८ तत्कीर्तने च द्वेधाप्रतिपत्तिः ।

१९ अशिष्यो वा विदितत्वात्

२० [1]अप्राप्ते त्रिसंशयाः ।

२१ प्राप्ते[2] च ।

२२ [1]उभयत्र च ।

**इग्यणः संप्रसारणम् ॥ ४५ ॥**

१ संप्रसारणसंज्ञायां वाक्यसंज्ञा चेद्वर्णविधिः ।

२ वर्णसंज्ञा चेन्निर्वृत्तिः ।

३ विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य ।

**आद्यन्तौ टकितौ ॥ ४६ ॥**

१ टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः ।

२ परवचनात्सिद्धमिति चेन्नापवादत्वात् ।

३ सिद्धं तु षष्ठ्यधिकारे वचनात् ।

४ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसंप्रत्ययः ।

**मिदचोऽन्त्यात्परः ॥ ४७ ॥**

१ मिदचोऽन्त्यात्पर इति स्थानपरप्रत्ययापवादः ।

२ अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम् ।

३ मर्जिमच्योश्च ।

४ अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः ।

५ परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकारप्रतिषेधः ।

६ पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ।

७ न वा बहिरङ्गलक्षणत्वात् ।

**एच इग्घ्रस्वादेशे ॥ ४८ ॥**

१ ऐच इक् सवर्णाकारनिवृत्त्यर्थम् ।

२ दीर्घाप्रसङ्गस्तु निवर्तकत्वात् ।

३ सिद्धमेङः सस्थानत्वात् ।

४ ऐचोश्चोत्तरभूयस्त्वात् ।

**षष्ठी स्थानेयोगा ॥ ४९ ॥**

१ षष्ठ्याः स्थानेयोगवचनं नियमार्थम् ।

२ अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति ।

३ अवयवषष्ठ्यादीनां चाप्राप्तियोगस्यासंदिग्धत्वात् ।

४ विशिष्टा वा षष्ठी स्थानेयोगा ।

**स्थानेऽन्तरतमः ॥ ५० ॥**

१ स्थानिन एकत्वनिर्देशादनेकादेशनिर्दे-

१ प. पुस्तके नास्ति । २ इतः परमाधिकं प. पुस्तके । द्वन्द्वे च विभाषा जसि । ऊर्णोतेर्विभाषा । विभाषोपयमने । अनुपसर्गाद्वा । विभाषा वृक्षमृगादीनाम् । उषविदजागृभ्योऽन्यतरस्याम् । दीपादीनां विभाषा । विभाषाग्रे-। प्रथमपूर्वेषु । तृणादीनां विभाषा । एकहलादौ पूरयितव्येऽन्यतरस्याम् । श्वादेरिञि पदान्तस्यान्यतरस्याम् सपूर्वायाः प्रथमाया विभाषा । ३ प. पुस्तके इतः परधिकम् । विभाषा विप्रलापे । विभाषोपपदेन प्रतीयमाने । तिरोऽन्तर्धौ । विभाषा कृञि । अधिरीश्वरे । विभाषा कृञि । दिवस्तदर्थस्य । विभाषोपसर्गे । ४ प. पुस्तके इतः परमाधिकम् । ह्रक्रोरन्यतरस्याम् । न यदि । विभाषा साकाङ्क्षे । विभाषा श्वेः । विभाषा संघुषास्वनाम् । ५ पुस्तके इतः परमधिकं परवचनात्सिद्धमिति । ६ प. पुस्तके परमाधिकम् दीर्घप्रसङ्गः इति ।

शाच्च सर्वप्रसङ्गस्तस्मात्स्थानेऽन्तरतमवचनम् ।
२ स्थानेऽन्तरतमनिर्वर्तके स्थानिनिवृत्तिः ।
३ निर्वृत्तप्रतिपत्तौ निर्वृत्तिः ।
४ अनर्थकं च ।
५ उक्तं वा ।
६ प्रत्यात्मवचनं च ।
७ प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् ।
८ अन्तरतमवचनं च ।
९ व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः ।
१० अक्षु चानेकवर्णादेशेषु ।
११ गुणवृद्ध्येज्भावेषु च ।
१२ ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् ।
१३ न व ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम् ।
१४ सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् ।
१५ न वानेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याविघातः ।
१६ संप्रयोगो वा नष्टाश्वदग्धरथवत् ।
१७ एजवर्णयोरादेशेऽवर्णं स्थानिनोऽवर्णप्रधानत्वात् ।
१८ सिद्धं तूभयान्तर्यात् ।

**उरण् रपरः ॥ ५१ ॥**

१ उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः ।
२ य उः स्थाने स रपर इति चेद् गुणवृद्ध्योरवर्णाप्रतिपत्तिः ।
३ सिद्धं तु प्रसङ्गे रपरत्वात् ।
४ आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः ।
५ उदात्तादिषु च ।
६ एकादेशस्योपसंख्यानम् ।[1]
७ अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः ।[2]
८ अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिशेषविसर्जनीयप्रतिषेधः प्रत्ययाव्यवस्था च ।
९ पूर्वान्ते वैवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च ।
१० परादावकारलोपौत्वपुक्प्रतिषेधश्चक्युपधाह्रस्वत्वमिटोऽव्यवस्थाभ्यासलोपोऽभ्यस्ततादिस्वरो दीर्घत्वं च ।

**अलो ऽन्त्यस्य ॥ ५२ ॥**

१ अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः ।
२ इतरथा ह्यनिष्टप्रसङ्गः ।
३ योगशेषे च ।

**ङिच्च ॥ ५३ ॥**

१ तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः ।

**आदेः परस्य ॥ ५४ ॥**

१ अलोऽन्त्यस्यादेः परस्यानेकाल्शित्सर्वे

१ प. पुस्तके नास्ति २ प. पुस्तके अवयवग्रहणात्सिद्धमित्यधिकम् ।

स्येत्यपवादविप्रतिषेधात्सर्वादेशः ।

**अनेकाल्शित् सर्वस्य ॥ ५५ ॥**

**स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥**

१ स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशो गुरुवद्गुरुपुत्र इति यथा ।

२ अल्विधौ प्रतिषेधेऽविशेषणेऽप्राप्तिस्तस्यादर्शनात् ।

३ सामान्यातिदेशे विशेषानतिदेशः ।

४ सत्याश्रये विधिरिष्टः ।

५ प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात् ।

६ न वानुदेशिकस्य प्रतिषेधादितरेण भावः ।

७ आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः ।

८ आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् ।

९ एकदेशविकृतस्योपसंख्यानम् ।

१० एकदेशविकृतस्यानन्यत्वात्सिद्धम् ।

११ अनित्यविज्ञानं तु तस्मादुपसंख्यानम्[१] ।

१२ अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् ।

१३ सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात् ।

१४ कार्यविपरिणामाद्वा सिद्धम् ।

१५ अपवादप्रसङ्गस्तु स्थानिवत्त्वात् ।

१६ उक्तं[२] वा ।

१७ सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् ।

१८ तस्य दोषस्तयादेश उभयप्रतिषेधः ।

१९ जात्याख्यायां वचनातिदेशे स्थानिवद्भावप्रतिषेधः ।

२० ल्यब्ग्रहणेऽदीर्घः ।

२१ आहिभुवोरीट्प्रतिषेधः ।

२२ वध्यादेशे वृद्धितत्त्वप्रतिषेधः ।

२३ इड्विधिश्च ।

२४ आकारान्तान्नुक्षुक्प्रतिषेधः ।

२५ लोडादेशे शाभावजभावधित्वहिलोपैत्त्वप्रतिषेधः ।

२६ त्र्यादेशे स्रन्तप्रतिषेधः ।

२७ आम्विधौ च ।

२८ स्वरे वस्वादेशे ।

२९ गोः पूर्वणित्त्वात्वस्वरेषु ।

३० करोतिपिब्योः प्रतिषेधः ।

३१ उक्तं[३] वा ।

**अचः परस्मिन्पूर्वविधौ[४] ॥ ५७ ॥**

१ अचः पूर्वविज्ञानादैचोः सिद्धम् ।

२ तत्रादेशलक्षणप्रतिषेधः[५] ।

३ असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः ।

४ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः ।

५ तस्मात्स्थानिवद्वचनमसिद्धत्वं च ।

६ उक्तं[६] वा[७] ।

१ इतः परमधिकं प. पुस्तके । एकदेशविकृतेषूपसंख्यानम् । अनादेशत्वात् । रूपान्यत्वाच्च । आदेशः स्थानिवदिति चेन्नानाश्रितत्वात् । आश्रय इति चेदल्विधिप्रसङ्गः । इति भारद्वाजीयपाठः । २ प. पुस्तके इदं नास्ति । ३ प. पुस्तके नास्ति । ४ अपरविधाविति वक्तव्यम् इदमधिकमितः परं प. पुस्तके । ५ प. पुस्तके इतः परमिदमधिकम् । असिद्धवचनात्सिद्धम् । ६ प. पुस्तके नास्ति । ७ प. पुस्तके इतः परमधिकम् । काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति । कल्प्यो हि वाक्यशेषो वाक्यं वक्त्रधीनं हि ॥

७ अनन्तरस्य चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम् ।
८ पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम् ।
९ गुरुसंज्ञा च ।
१० न वा संयोगस्यापूर्वविधित्वात् ।
११ एकादेशस्योपसंख्यानम् ।
१२ उभयनिमित्तत्वात् ।
१३ उभयादेशत्वाच्च ।
१४ हल्चोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः ।
१५ [1]स्थूलादीनां यणादिलोपेऽवादेशः ।
१६ केकयमित्रय्वोरियादेश एत्वम् ।
१७ उत्तरपदलोपे च ।
१८ यङ्लोपे यणियङुवङः ।
१९ अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः ।
२० अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः ।
२१ द्विर्वचनादयश्च प्रतिषेधे ।
२२ क्सलोपे लुग्वचनम् ।
२३ हन्तेर्घत्वम् ।
२४ ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशप्रतिषेधः ।
२५ यणादेशे युलोपेत्वानुनासिकात्त्वप्रतिषेधः ।
२६ रायात्वप्रतिषेधश्च ।
२७ दीर्घे यलोपप्रतिषेधः ।
२८ अतो दीर्घे यलोपवचनम् ।

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥ ५८ ॥**

१ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ।
२ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ।
३ पूर्वत्रासिद्धे च ।
४ प्रयोजनं क्सलोपः सलोपे ।
५ दध आकारलोप आदिचतुर्थत्वे ।
६ हलो यमां यमि लोपे ।
७ अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु ।
८ द्विर्वचनादीनि च ।
९ वेरयलोपस्वरवर्जम् ।
१० तस्य दोषः संयोगादिलोपलत्वणत्वेषु ।

**द्विर्वचनेऽचि ॥ ५९ ॥**

१ आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् ।
२ तत्राभ्यासरूपम् ।
३ अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य ।
४ तत्र गाङ्प्रतिषेधः ।
५ कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम् ।
६ प्रत्यय इति चेत्कृत्येजन्तनामधातुष्वभ्यासरूपम् ।
७ द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् ।

१ प. पुस्तके नास्ति । २ प. पुस्तके दिवादीत्यधिकम् ।

८ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ।

**अदर्शनं लोपः ॥ ६० ॥**

१ [1]लोपसंज्ञायामर्थसतोरुक्तम् ।

२ सर्वप्रसङ्गस्तु सर्वस्यान्यत्रादृष्टत्वात् ।

३ तत्र प्रत्ययलक्षणप्रतिषेधः ।

४ सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात् ।

**प्रत्ययस्य लुक्श्लुलुपः ॥ ६१ ॥**

१ लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् ।

२ प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् ।

३ योगविभागात्सिद्धम् ।

४ कंसीयपरशव्ययोर्विशिष्टनिर्देशात्सिद्धम् ।

५ उक्तं वा ।

६ षष्ठीनिर्देशार्थं तु ।

७ अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः ।

८ सर्वादेशार्थं वा वचनप्रामाण्यात् ।

९ उत्तरार्थं तु ।

**प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥**

१ प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य ।

२ लुक्युपसंख्यानम् ।

३ लोपे हि विधानम् ।

४ न वादर्शनस्य लोपसंज्ञित्वात् ।

५ प्रत्ययादर्शनं तु लुमत्संज्ञम् ।

६ तत्र लुकि श्लुविधिप्रतिषेधः ।

७ न वा पृथक्संज्ञाकरणात् ।

८ लुमति प्रतिषेधाद्वा ।

९ सतो निमित्ताभावात्पदसंज्ञाभावः ।

१० तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीरिति ।

११ सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य ।

१२ भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम् ।

१३ तस्य दोषो ङीनकारलोपेत्त्वेम्विधयः ।

१४ प्रयोजनमपृक्तशिलोपे नुममामौ गुणवृद्धिदीर्घत्वेमडाट्श्नम्विधयः ।

१५ भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः ।

**न लुमताङ्गस्य ॥ ६३ ॥**

१ लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानम् ।

२ सर्वामन्त्रितसिज्लुक्स्वरवर्जम् ।

३ प्रयोजनं ञ्निनिकिल्लुकि स्वराः ।

४ पथिमथोः सर्वनामस्थाने ।

५ अह्नो रविधौ ।

६ उत्तरपदत्वे चापदादिविधौ ।

७ द्वन्द्वेऽन्त्यस्य ।

८ सिच उसोऽप्रसङ्ग आकारप्रकरणात् ।

९ युष्मदस्मदोः स्थग्रहणात् ।

१० आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघातः ।

११ अङ्गाधिकार इष्टो विधिप्रतिषेधौ ।

१२ क्रमेदीर्घत्वं च ।

---

१ प. पुस्तके नास्ति । २ प. पुस्तके नास्ति ।

१३ न लुमता तस्मिन्निति चेद्वनिणिङादेशा-स्तल्लोपे ।

**अचो ऽन्त्यादि टि ॥ ६४ ॥**

**अलो ऽन्त्यात्पूर्व उपधा ॥ ६५ ॥**

१ उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः[1] ।

२ अन्त्यविज्ञानात्सिद्धमिति चेन्नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे ।

३ प्रयोजनमव्यक्तानुकरणस्यात इतौ ।

४ घ्वसोरेद्धावभ्यासलोपश्च ।

५ आपि लोपोऽकोऽनचि ।

६ अत्र लोपोऽभ्यासस्य ।

७ अलोऽन्त्यात्पूर्वोऽलुपधेति वा ।

८ अवचनाल्लोकविज्ञानात्सिद्धम् ।

**तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥**

**तस्मादित्युत्तरस्य ॥ ६७ ॥**

१ निर्दिष्टग्रहणमानन्तर्यार्थम् ।

२ तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनम् ।

३ उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशः ।

४ प्रयोजनमतो लसार्वधातुकानुदात्तत्वे ।

५ बहोरिष्ठादीनामादिलोपे ।

६ गोतो णित् ।

७ रुदादिभ्यः सार्वधातुके ।

८ आने मुगीदासः ।

९ आमि सर्वनाम्नः सुट् ।

१० घेर्ङित्याण्नद्याः ।

११ याडापः ।

१२ ङमो ह्रस्वादचि ङमुण्नित्यम् ।

१३ विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः ।

१४ यथार्थं वा षष्ठीनिर्देशः ।

१५ प्रकल्पकमिति चेन्नियमाभावः ।

१६ प्रकृतिविकाराव्यवस्था च ।

१७ सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रकॢप्तिस्तत्रोभयकार्यप्रसङ्गः ।

**स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥**

१ शब्देनार्थगतेरर्थस्यासंभवात्तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वंरूपवचनम् ।

२ न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः ।

३ संज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् ।

४ मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् ।

५ सित्तद्विशेषाणां वृक्षाद्यर्थम् ।

६ पित्पर्यायवचनस्य च स्वाद्यर्थम् ।

७ जित्पर्यायवचनस्यैव राजाद्यर्थम् ।

८ झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् ।

**अणुदित् सवर्णस्य चाप्रत्ययः ॥ ६९ ॥**

१ अणसवर्णस्येति स्वरानुनासिक्यकालभेदात् ।

२ तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् ।

३ ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणसंप्रत्यायकत्वाच्छब्दस्यावचनम् ।

---

[1] प. पुस्तके इतः परमधिकम् अन्त्यविज्ञानात्सिद्धमिति ।

४ वर्णपाठ उपदेश इति चेदवरकालत्वात्परिभाषाया अनुपदेशः ।
५ तस्मादुपदेशः ।
६ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् ।
७ सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् ।
८ अनन्यत्वाच्च ।
९ अनेकान्तो ह्यनन्यत्वकरः ।
१० तद्वच्च हल्ग्रहणेषु ।
११ द्रुतविलम्बितयोश्चानुपदेशात् ।
१२ वृत्तिपृथक्त्वं तु नोपपद्यते ।
१३ तस्मात्तत्र तपरनिर्देशात्सिद्धम् ।

**तपरस्तत्कालस्य ॥ ७० ॥**

१ तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम् ।[१]
२ प्रापकमिति चेद्ध्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः ।
३ विप्रतिषेधात्सिद्धम् ।
४ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् ।
५ सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्वृत्तयो विशिष्यन्ते[२] ।

**आदिरन्त्येन सहेता ॥ ७१ ॥**

१ आदिरन्त्येन सहेतेत्यसंप्रत्ययः संज्ञिनोऽनिर्देशात् ।
२ सिद्धं त्वादिरिता सह तन्मध्यस्येति वचनात् ।
३ संबन्धिशब्दैर्वा तुल्यम् ।

**येन विधिस्तदन्तस्य ॥ ७२ ॥**

१ येन विधिस्तदन्तस्येति चेद्ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः ।
२ सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात् ।
३ समासप्रत्ययविधौ प्रतिषेधः ।
४ उगिद्वर्णग्रहणवर्जम् ।
५ अकच्क्षम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् ।
६ सिद्धं तु तदन्तान्तवचनात् ।
७ तदेकदेशविज्ञानाद्वा सिद्धम् ।
८ प्रयोजनं सर्वनामाव्ययसंज्ञायाम् ।
९ उपपदविधौ भयाढ्यादिग्रहणम् ।
१० ङीब्विधावुगिद्ग्रहणम् ।
११ प्रतिषेधे स्वस्रादिग्रहणम् ।
१२ अपरिमाणबिस्तादिग्रहणं च प्रतिषेधं ।
१३ दिति ।
१४ रोण्या अण् ।
१५ तस्य च ।
१६ रथसीताहलेभ्यो यद्विधौ ।
१७ सुसर्वार्धदिक्शब्देभ्यो जनपदस्य ।
१८ ऋतोर्वृद्धिमद्विधाववयवानाम् ।
१९ ठञ्विधौ संख्यायाः ।
२० धर्मान्नञः ।
२१ पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ।
२२ प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु ।
२३ महदप्स्वसृनप्तॄणां दीर्घविधौ ।
२४ पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् ।
२५ द्युपाथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् ।

---

१ इदं प. पुस्तके नास्ति । २ प. पुस्तके इतः परमाधिकं मेयाँधातवत् ।

२६ त्यदादिविधिभक्तादिश्रग्रहणं च ।
२७ वर्णग्रहणं च सर्वत्र ।
२८ प्रत्ययग्रहणं चापञ्चम्याः ।
२९ यस्मिन्विधिस्तदादावल्ग्रहणे ।

**वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७३ ॥**

१ वृद्धसंज्ञायामजसंनिवेशादनादित्वम् ।
२ एकान्तादित्वे च सर्वप्रसङ्गः ।
३ सिद्धमजाकृतिनिर्देशात् ।
४ व्यञ्जनस्याविद्यमानत्वं यथान्यत्र ।
५ वा नामधेयस्य ।
६ गोत्रोत्तरपदस्य च ।
७ गोत्रान्ताद्वासमस्तवत् ।
८ जिह्वाकात्यहरितकात्यवर्जम् ।

**त्यदादीनि च ॥ ७४ ॥**

**एङ् प्राचां देशे ॥ ७५ ॥**

प्रथमाध्यायस्य प्रथमः पादः ।

**गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ ॥**

१ ङित्किद्वचने तयोरभावादप्रसिद्धिः ।
२ भवतीति चेदादेशप्रतिषेधः ।
३ संज्ञाकरणे ङिद्ग्रहणेऽसंप्रत्ययः शब्दभेदात् ।
४ तद्वदतिदेशेऽकिद्विधिप्रसङ्गः ।
५ सिद्धं तु प्रसज्यप्रतिषेधात् ।
६ सर्वत्र सन्नन्तात्मनेपदप्रतिषेधः ।
७ सिद्धं तु पूर्वस्य कार्यातिदेशात् ।
८ पृथगनुबन्धत्वे प्रयोजनं वञ्चिस्वपियजादीनामसंप्रसारणं सार्वधातुकवत्त्वादिषु ।
९ जाग्रोऽगुणविधिः ।
१० कुटादीनामिट्प्रतिषेधः ।
११ क्त्वायां कित्प्रतिषेधश्च ।

**विज इट् ॥ २ ॥**

**विभाषोर्णोः ॥ ३ ॥**

**सार्वधातुकमपित् ॥ ४ ॥**

१ अपिन्ङिदिति चेच्छ्वेकादेशप्रतिषेधः आदिवत्त्वात् ।
२ न पिन्ङिदिति चेदुत्तमैकादेशप्रतिषेधः ।

**असंयोगाल्लिट् कित् ॥ ५ ॥**

१ ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्विप्रतिषेधेन ।
२ उक्तं वा[1] ।

**इन्धिभवतिभ्यां च ॥ ६ ॥**

१ इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां किद्वचनानर्थक्यम्[2] ।

**मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ७ ॥**

**रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥ ८ ॥**

**इको झल् ॥ ९ ॥**

**हलन्ताच्च ॥ १० ॥**

१ दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्[3] ।

---

१ प. पुस्तके नास्ति । २ प. पुस्तके इतः परमधिकम् । इकः कित्त्वं गुणो मा भूत् । दीर्घारम्भात् । कृते भवेत् । अनर्थकं तु ह्रस्वार्थम् । दीर्घाणां तु प्रसज्यते । सामर्थ्याद्धि पुनर्भाव्यम् । ऋदित्वं दीर्घसंश्रयम् । दीर्घाणां नाकृते दीर्घे । णिलोपस्तु प्रयोजनम् । ३ प. पुस्तके इतः परमधिकम् इच्च कस्य तकारेत्त्वम् । दीर्घो मा भूद् । ऋतेऽपि सः । अनन्तरे प्लुतो मा भूत् । प्लुतश्च विषये स्मृतः । न सेडिति कृते कित्त्वे । निष्ठायामवधारणात् । ज्ञापकान्न परोक्षायाम् । सनि झल्ग्रहणं विदुः । इत्वं किरसंनियोगेन । रेण तुल्यं सुधीवनि । वस्त्वर्थम् । किदतीदेशात् । निगृहीतिः । क्त्वा च विग्रहात् ।

**लिङ्सिचावात्मनेपदेषु ॥ ११ ॥**
**उश्च ॥ १२ ॥**
**वा गमः ॥ १३ ॥**
**हनः सिच् ॥ १४ ॥**
**यमो गन्धने ॥ १५ ॥**
**विभाषोपयमने ॥ १६ ॥**
**स्थाध्वोरिच्च ॥ १७ ॥**
**न क्त्वा सेट् ॥ १८ ॥**
**निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः १९**
**मृषस्तितिक्षायाम् ॥ २० ॥**
**उदुपधाद्भावादिकर्मणोरन्यतरस्याम् २१**
१ उदुपधाच्छपः ।
**पूङः क्त्वा च ॥ २२ ॥**
१ पूङः क्त्वानिष्ठयोरिटि वा प्रसङ्गः सेट्प्रकरणात् ।
२ न वा सेट्त्वास्याकिदाश्रयत्वादनिटि वा कित्त्वम् ।
३ इड्विधौ ग्रहणम्[1] ।
**नोपधात् थफान्ताद्वा ॥ २३ ॥**
**वञ्चिलुञ्च्यृतश्च ॥ २४ ॥**
**तृषिमृषिकृशेः काश्यपस्य ॥ २५ ॥**
**रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥**
१ रलः क्त्वासनोः कित्त्वम् ।
**ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ २७ ॥**
१ ह्रस्वादिषु समसंख्याप्रसिद्धिर्निर्देशवैषम्यात् ।
२ सिद्धं तु समसंख्यत्वात् ।
३ त्रयाणां हि विकारनिर्देशः ।
४ दीर्घप्लुतयोस्तु पूर्वसंज्ञाप्रसङ्गः ।
५ सिद्धं तु तपरनिर्देशात् ।
६ द्रुतादिषु चोक्तम्[2] ।
**अचश्च ॥ २८ ॥**
१ ह्रस्वादिविधिरलोऽन्त्यस्येति चेद्व्यञ्जनप्राच्छिशमादिप्रभृतिहानिगमिदीर्घेष्वज्ग्रहणम् ।
२ अचश्चेन्नपुंसकह्रस्वाक्कृत्सार्वधातुकनामिदीर्घेष्वनन्त्यप्रतिषेधः ।
३ संज्ञया विधाने नियमः ।
४ अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम् ।
**उच्चैरुदात्तः ॥ २९ ॥**
१ उच्चनीचस्यानवस्थितत्वात्संज्ञाप्रसिद्धिः ।
२ सिद्धं तु समानप्रक्रमवचनात् ।
**नीचैरनुदात्तः ॥ ३० ॥**
**समाहारः स्वरितः ॥ ३१ ॥**
१ समाहारोऽचोश्चेन्नाभावात् ।
२ गुणयोश्चेन्नाच्प्रकरणात् ।
३ सिद्धं त्वच्समुदायस्याभावात्तद्गुणे संप्रत्ययः ।
**तस्यादित उदात्तमर्धह्रस्वम् ॥ ३२ ॥**
१ स्वरितस्यार्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात्कार्यं स्वरितादिति सिद्ध्यर्थम् ।
२ स्वरितोदात्तार्थं च ।

---

१ प. पुस्तके इतः परमधिकम् । नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम् इति भारद्वाजीयः पाठः॥ २ इदं प. पुस्तके नास्ति ।

३ स्वरितोदात्तार्थास्वरितार्थम् ।

४ स्वरितपरसन्नतरार्थं च ।

५ देवब्रह्मणोरनुदात्तवचनं ज्ञापकं स्वरितादिति सिद्धत्वस्य ।

**एकश्रुति दूरात्संबुद्धौ ॥ ३३ ॥**

**यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ ३४ ॥**

**उच्चैस्तरां वा वषट्कारः ॥ ३५ ॥**

**विभाषा छन्दसि ॥ ३६ ॥**

**न सुब्रह्मण्यायां स्वरितस्य तूदात्तः॥३७॥**

१ सुब्रह्मण्यायामोकार उदात्तः ।

२ आकार आख्याने परादिश्च ।

३ वाक्यादौ च द्वे द्वे ।

४ मघवन्वर्जम् ।

५ सुत्यापराणामन्तः ।

६ असावित्यन्तः ।

७ अमुष्येत्यन्तः ।

८ स्यान्तस्योपोत्तमं च ।

९ वा नामधेयस्य ।

**देवब्रह्मणोरनुदात्तः ॥ ३८ ॥**

१ देवब्रह्मणोरनुदात्तत्वमेके ।

**स्वरितात्संहितायामनुदात्तानाम् ॥३९॥**

१ स्वरितात्संहितायामनुदात्तानामिति चेद्व्येकयोरैकश्रुत्यवचनम् ।

२ अविशेषणैकश्रुत्यामिति चेद्व्यवहितानामप्रसिद्धिः ।

३ अनेकमपीति तु वचनात्सिद्धम् ।

**उदात्तस्वरितपरस्य सन्नतरः ॥ ४० ॥**

**अपृक्त एकाल् प्रत्ययः ॥ ४१ ॥**

१ अपृक्तसंज्ञायां हल्ग्रहणं स्वादिलोपे हलोऽग्रहणार्थम् ।

२ अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गः[1] ।

३ वचनप्रामाण्यादिति चेत्फिञ्निवृत्त्यर्थं वचनम्[2] ।

४ पैलादिषु वचनात्सिद्धम् ।

**तत्पुरुषः समानाधिकरणःकर्मधारयः४२**

१ तत्पुरुषः समासाधिकरणः कर्मधारय इति चेत्समासैकार्थत्वादप्रसिद्धिः ।

२ सिद्धं तु पदसामानाधिकरण्यात् ।

**प्रथमानिर्दिष्टं समास उपसर्जनम् ॥४३॥**

१ प्रथमानिर्दिष्टं समास उपसर्जनमिति चेचेदनिर्देशात्प्रथमायाः समासे संज्ञाप्रसिद्धिः ।

२ सिद्धं तु समासविधाने वचनात् ।

३ न वा तादर्थ्यात्ताच्छब्द्यम् ।

४ यस्य विधौ प्रथमानिर्देशस्ततोऽन्यत्राप्युपसर्जनसंज्ञाप्रसङ्गः ।

५ सिद्धं तु यस्य विधौ तं प्रतीति वचनात् ।

६ षष्ठ्यन्तयोश्चोपसर्जनत्व उक्तम्[3] ।

७ उक्तं वा[3] ।

**एकविभक्ति चापूर्वनिपाते ॥ ४४ ॥**

१ एकविभक्तावषष्ठ्यन्तवचनम् ।

२ उक्तं वा[3] ।

३ प्रयोजनं द्विगुप्राप्तापन्नालंपूर्वोपसर्गाः क्तार्थे ।

---

१ प. पुस्तके इतः परमधिकम् । अणिञोर्लुगर्थमल्ग्रहणम् । २ प. पुस्तके इतः परमधिकम् नाप्रतिषेधात् अप्राप्तेर्वा । ३ इदं प. पुस्तके नास्ति ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ४५**

१ अर्थवत्यनेकपदप्रसङ्गः ।

२ समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात् समुदायार्थवत्त्वं यथा लोके ।

३ वाक्यप्रतिषेधोऽर्थवत्त्वात् ।

४ पदार्थादन्यस्यानुपलब्धिरिति चेत्पदार्थाभिसंबन्धस्योपलब्धिः ।

५ तस्मात्प्रतिषेधः ।

६ अर्थवत्समुदायानां समासग्रहणं नियमार्थम् ।

७ अर्थवत्ता नोपपद्यते केवलेनावचनात् ।

८ न वा प्रत्ययेन नित्यसंम्बन्धात्केवलस्याप्रयोगः ।

९ सिद्धं त्वन्वयव्यतिरेकाभ्याम् ।

१० वर्णस्यार्थवदनर्थकत्व उक्तम् ।

११ संघातार्थवत्त्वाच्चेति चेदृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः ।

१२ निपातस्यानर्थकस्य प्रातिपदिकत्वम् ।

१३ अप्रत्यय इति चोत्तवेकादेशे प्रतिषेधोन्तवत्त्वात् ।

१४ न प्रत्यय इति चेदुकादेशे प्रतिषेध आदिवत्त्वात् ।

१५ सुब्लोपे च प्रत्ययलक्षणत्वात् ।

**कृत्तद्धितसमासाश्च ॥ ४६ ॥**

१ समासग्रहण उक्तम्[1] ।

**ह्रस्वो नपुंसके प्रातिपादिकस्य ॥ ४७ ॥**

१ नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं तिन्निवृत्त्यर्थम् ।

२ अव्ययप्रतिषेधः ।

३ न वा लिङ्गाभावात् ।

४ यजेकादेशदीर्घत्वेषु प्रतिषेधः ।

५ यजेकादेशदीर्घत्वेषु बहिरङ्गलक्षणत्वात्सिद्धम् ।

**गोस्त्रियोरुपसर्जनस्य ॥ ४८ ॥**

१ उपसर्जनह्रस्वत्वे च ।

२ गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम् ।

३ ईयसो बहुव्रीहौ पुंवद्वचनम् ।

४ पूर्वपदस्य च प्रतिषेधो गोसमासनिवृत्त्यर्थम् ।

५ कपि च ।

६ द्वन्द्वे च ।

७ [2]उक्तं वा ।

**लुक्तद्धितलुकि ॥ ४९ ॥**

१ तद्धितलुक्यवन्त्यादीनां प्रतिषेधः ।

१ तद्धितलुक्यवन्त्यादीनामप्रतिषेधोऽलुक्परत्वात्[3] ।

**इद्गोण्याः ॥ ५० ॥**

**लुपि युक्तवद्व्यक्तिवचने ॥ ५१ ॥**

१ अन्यत्राभिधेयव्यक्तिवचनभावाल्लुपि युक्तवदनुदेशः ।

२ लुपोऽदर्शनसंज्ञित्वादर्थगतिर्नोपपद्यते ।

---

१ इदं प. पुस्तके नास्ति । २ इदं प. पुस्तके नास्ति । ३ प. पुस्तके इतः परमाधिकम् । इद्गोण्या नेति वक्तव्यम् । ह्रस्वता हि विधीयते । इति वा वचने तावत् । मात्रार्थं वा कृतं भवेत् । गोण्या ह्रस्वं प्रकरणात् । सूच्याद्यर्थमथापि वा ।

३ न वा दर्शनस्याशक्यत्वादर्थगतिः साहचर्यात् ।

४ योगाभावाच्चान्यस्य ।

५ समास उत्तरपदस्य बहुवचनस्य लुपः ।

**विशेषणानां चाजातेः ॥ ५२ ॥**

१ विशेषणानां वचनं जातिनिवृत्त्यर्थम् ।

२ समानाधिकरणत्वात्सिद्धम् ।

३ हरीतक्यादिषु व्यक्तिः ।

४ खलतिकादिषु वचनम् ।

५ मनुष्यलुपि प्रतिषेधः ।

**तदशिष्यं संज्ञाप्रमाणत्वात् ॥ ५३ ॥**

**लुब्योगाप्रख्यानात् ॥ ५४ ॥**

**योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥**

**प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ ५६ ॥**

**कालोपसर्जने च तुल्यम् ॥ ५७ ॥**

**जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ॥ ५८ ॥**

१ जात्याख्यायां सामान्याभिधानादैकार्थ्यम् ।

२ तत्रैकवचनादेश उक्तम् ।

३ अर्थातिदेशात्सिद्धम् ।

४ संख्याप्रयोगे प्रतिषेधः ।

५ अस्मदो नामयुवप्रत्यययोश्च[१] ।

६ अशिष्यं वा बहुवत्पृथक्त्वाभिधानात् ।

७ जातिशब्देन हि द्रव्याभिधानम् ।

**अस्मदो द्वयोश्च ॥ ५९ ॥**

**फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ ६० ॥**

**छन्दसि पुनर्वस्वोरेकवचनम् ॥ ६१ ॥**

**विशाखयोश्च ॥ ६२ ॥**

१ पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्णेति सिद्धम् ।

**तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ ६३ ॥**

**सरूपाणामेकशेष एकविभक्तौ ॥ ६४ ॥**

१ प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् ।

२ तत्रानेकार्थाभिधानेऽनेकशब्दत्वम् ।

३ तस्मादेकशेषः ।

४ एकविभक्ताविति चेन्नाभावाद्विभक्तेः ।

५ पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वात् ।

६ समास इति चेत्स्वरसमासान्तेषु दोषः ।

७ अङ्गाश्रये चैकशेषवचनम् ।

८ तिङ्समासे तिङ्समासवचनम् ।

९ तिङ्विधिप्रतिषेधश्च ।

१० असमासे वचनलोपः ।

११ द्विवचनबहुवचनविधिः ।

१२ द्वन्द्वप्रतिषेधश्च ।

१३ विभक्त्यन्तानामेकशेषे, एकविभक्त्यन्तानामिति तु पृथग्विभक्तिप्रतिषेधार्थम् ।

१४ न वार्थविप्रतिषेधाद्युगपद्वचनाभावः ।

१५ अनेकार्थाश्रयश्च पुनरेकशेषः ।

१६ तस्मान्नैकशब्दत्वम् ।

१ इदं प. पुस्तके नास्ति । १ प. इदमधिकम् । ('अस्मदः सविशेषणस्य प्रयोगेनेत्येव' इत्यपर आह ।)

१७ प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधः सरूपत्वात् ।
१८ हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानम् ।
१९ न वा पदस्यार्थे प्रयोगात् ।
२० सर्वत्रापत्यादिषूपसंख्यानम् ।
२१ सिद्धं तु समानार्थानामेकशेषवचनात् ।
२२ नानार्थानामपि सरूपाणाम् ।
२३ एकार्थानामपि विरूपाणाम् ।
२४ स्वरभिन्नानां यस्योत्तरस्वरविधिः ।
२५ संख्याया अर्थासंप्रत्ययादन्यपदार्थत्वाच्चानेकशेषः ।
२६ प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वात्
२७ द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात् ।
२८ नैकार्थ्यमिति चेदारम्भानर्थक्यम् ।
२९ अशिष्य एकशेष एकेनोक्तत्वात् ।
३० प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याभिधानादप्रत्यर्थमिति चेत्तदपि प्रत्यर्थमेव[२]।
३१ यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेकेनप्यनेकस्याभिधानम्[३] ।
३२ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः ।
३३ अभिधानं पुनः स्वाभाविकम् ।
३४ उभयदर्शनाच्च ।
३५ आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः ।
३६ प्रख्याविशेषात् ।
३७ अव्यपवर्गगतेश्च ।
३८ ज्ञायते चैकोपदिष्टम् ।
३९ धर्मशास्त्रं च तथा ।
४० अस्ति चैकमनेकाधिकरणस्थं युगपदितीन्द्रवद्विषयः ।
४१ नैकमनेकाधिकरणस्थं युगपदिति चेत्तथैकशेषे ।
४२ द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः ।
४३ तत्रासर्वद्रव्यगतिः ।
४४ चोदनायां चैकस्योपाधिवृत्तेः ।
४५ द्रव्याभिधानं व्याडिः ।
४६ तथा च लिङ्गवचनासिद्धिः ।
४७ चोदनासु च तस्यारम्भात् ।
४८ न चैकमनेकाधिकरणस्थं युगपत् ।
४९ विनाशे प्रादुर्भावे च सर्वं तथा स्यात् ।
५० अस्ति च वैरूप्यम् ।
५१ तथा च विग्रहः ।
५२ व्यर्थेषु च मुक्तसंशयम् ।
५३ लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात् ।
५४ गुणवचनवद्वा ।
५५ अधिकरणगतिः साहचर्यात् ।
५६ न चैकमनेकाधिकरणस्थं युगपदित्यादित्यवद्विषयः ।
५७ अविनाशोऽनाश्रितत्वात् ।
५८ वैरूप्यविग्रहौ द्रव्यभेदात् ।
५९ व्यर्थेषु च सामान्यात्सिद्धम् ।

१ प. पुस्तके इतः परमधिकम् । नैकार्थ्यम् । २ प. पुस्तके इतः परमधिकम् । यावतामभिधानं तावतां प्रयोगे न्याय्यः । ३ प. पुस्तके इतः परमधिकम् । एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः ।

**वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥६५॥**

**स्त्री पुंवच्च ॥ ६६ ॥**

**पुमान्स्त्रिया ॥ ६७ ॥**

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥**

१ असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषस्याविवक्षितत्वात्सामान्यस्य च विवक्षितत्वात्सिद्धम् ।

२ ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्य विभक्तिपरस्य विशेषवाचकत्वादनेकशेषः ।

**नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥**

१ प्रधाने कार्यसंप्रत्ययाच्छेषः ।

२ आकृतिवाचित्वादेकवचनम्[१] ।

**पिता मात्रा ॥ ७० ॥**

**श्वशुरः श्वश्र्वा ॥ ७१ ॥**

१ भ्रातृपुत्रपितृश्वशुराणां कारणाद्द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात् सिद्धम् ।

२ दर्शनं हेतुरिति चेत्तुल्यम् ।

३ तद्विषयं च ।

४ अन्यत्रापि तद्विषयदर्शनात् ।

**त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥**

१ त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि ।

२ अद्वन्द्वतत्पुरुषविशेषणानाम् ।

३ त्यदादीनां सामान्यार्थत्वात् ।

४ परस्य चोभयवाचित्वात्[४] ।

५ पूर्वशेषदर्शनाच्च ।

६ सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात् सिद्धम् ।

**ग्राम्यपशुसंघेष्वतरुणेषु स्त्री[५] ॥ ७३ ॥**

इति प्रथमाध्यायस्य द्वितीयः पादः ।

**भूवादयो धातवः ॥ १ ॥**

१ पाठेन धातुसंज्ञायां समानशब्दप्रतिषेधः ।

२ परिमाणग्रहणं च ।

३ क्रियावचन उपसर्गप्रत्ययप्रतिषेधः ।

४ सङ्घातेनार्थगतेः ।

५ अस्तिभवतिविद्यतीनां धातुत्वम् ।

६ प्रत्ययार्थस्याव्यतिरेकात्प्रकृत्यन्तरेषु । धातोश्चार्थभेदात्प्रत्ययान्तरेषु । [७]सिद्धं त्वन्वयव्यतिरेकाभ्याम् ।

७ क्रियाविशेषक उपसर्गः ।

८ भाववचने तदर्थप्रत्ययप्रतिषेधः ।

९ इतरेतराश्रयं च प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः ।

१० सिद्धं तु नित्यशब्दत्वादनाश्रित्य भाववचनत्वं प्रत्ययः ।

११ प्रथमभावग्रहणं च ।

---

१ प. पुस्तके इतः परमधिकम् भ्रातृपुत्रपितृश्वशुराणां कारणाद् द्रव्ये शब्दनिवेशः । २ प. पुस्तके इतः परमधिकम् दर्शनं वै हेतुः । ३ प. पुस्तके इदमधिकमितःपरम् । न वा एष लोके संप्रत्ययः । ४ इदं प. पुस्तके नास्ति । ५ प. पुस्तके इतः परमधिकं वार्तिकम् । अनेकशफेष्विति वक्तव्यम् । प. पुस्तके इतः परमधिकम् । भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते । ७ सिद्धं तु इत्यधिकं कीलहॉर्नपाठे । अपि तु तन्मंजु हस्तलिखितेषु न दृश्यते ।

१२ भूवादिपाठः प्रातिपदिकाणपयत्यादिनिवृत्त्यर्थः ।

१३ स्वरानुबन्धज्ञापनाय च ।

**उपदेशेऽजनुनासिक इत् ॥ २ ॥**

१ इत्संज्ञायां सर्वप्रसङ्गोऽविशेषात् ।

२ सिद्धं तूपदेशनेऽनुनासिकवचनात् ।

**हलन्त्यम् ॥ ३ ॥**

१ हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् ।

२ सिद्धं तु व्यवसितान्त्यत्वात् ।

३ लकारस्यानुबन्धाज्ञापितत्वाद्धल्ग्रहणाप्रसिद्धिः ।

४ सिद्धं तु लकारनिर्देशात् ।

५ एकशेषनिर्देशाद्वा ।

६ प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते ।

७ इदर्थाभावात्सिद्धम् ।

**न विभक्तौ तुस्माः ॥ ४ ॥**

१ विभक्तौ तवर्गप्रतिषेधोऽतद्धिते ।

**आदिर्ञिटुडवः ॥ ५ ॥**

**षः प्रत्ययस्य ॥ ६ ॥**

**चुटू ॥ ७ ॥**

१ चुञ्चुप्चणपोश्चकारप्रतिषेधः ।

२ इदर्थाभावात्सिद्धम् ।

३ पित्करणं किमर्थमिति चेत्पर्यायार्थम् ।

४ इर उपसंख्यानम् ।

५ अवयवग्रहणादिति चेदिदिद्विधिप्रसङ्गः।[1]

**लशक्वतद्धिते ॥ ८ ॥**

**तस्य लोपः ॥ ९ ॥**

१ इतो लोपे णल्क्त्वानिष्ठासूपसंख्यानमित्प्रतिषेधात् ।

२ सिद्धं तु णलादीनां ग्रहणप्रतिषेधात् ।

३ निर्दिष्टलोपाद्वा ।

४ तत्र तुस्मानां प्रतिषेधः ।

५ न वोच्चारणसामर्थ्यात् ।

६ अनुबन्धलोपे भावाभावयोर्विप्रतिषेधादप्रसिद्धिः ।

७ सिद्धं त्वपवादन्यायेन ।

८ भावो हि कार्यार्थोऽनन्यार्थो लोपः ।

९ एकान्तस्तत्रोपलब्धेः ।

१० तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वात् ।

११ अनेकान्ते वृत्तिविशेषः ।

१२ अनन्तर इति चेत्पूर्वपरयोरित्कृतप्रसङ्गः ।

१३ सिद्धं तु व्यवसितपाठात् ।

१४ इतरथा ह्येकान्तेऽपि संदेहः ।

१५ वृत्ताद्वा ।

**यथासंख्यमनुदेशः समानाम् ॥ १० ॥**

१ संज्ञासमासनिर्देशात्सर्वप्रसङ्गोऽनुदेशस्य तत्र यथासंख्यवचनं नियमार्थम् ।

२ संज्ञासमासनिर्देशःपृथग्विभक्ति संज्ञ्यनुचरणार्थः ।

३ प्रकरणे च सर्वसंप्रत्ययार्थः ।

४ संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायाव एच इत्यनिर्देशः ।

---

१ प. पुस्तके इतः परमाधिकम् । अवयवग्रहणादिति सिद्धम् ।

५ अर्थवत्श्लेल्लुटोर्नन्धरीहणसिन्धुतक्षशिलादिषु दोषः ।
६ आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु ।
७ एङः पूर्वत्वे प्रतिषेधः ।
८ अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति ।
९ उदिकूले रुजिवहोः ।
१० तच्छीलादिषु धातुत्रिग्रहणेषु ।
११ घञादिषु द्विग्रहणेषु ।
१२ अवे तॄस्त्रोः करणाधिकरणयोः ।
१३ कर्तृकर्मणोश्च भूकृञोः ।
१४ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ।
१५ कृभ्वोः क्त्वाणमुलौ ।
१६ अधीयानविदुषोश्छन्दोब्राह्मणानि ।
१७ रोपधेतोः पथिदूतयोः ।
१८ तत्र भवस्तस्य व्याख्यानः क्रतुयज्ञेभ्यश्च ।
१९ संघादिष्वञ्प्रभृतयः ।
२० वेशोयशआदेर्भगाद्यल्खौ ।
२१ ङसिङसोः ख्यत्यात्परस्य ।
२२ न वा समानयोगवचनात् ।
२३ तस्य दोषो विदो लटो वा ।
२४ ध्माधेटोर्नाडीमुष्ट्योश्च ।
२५ खलगोरथादिनित्रकट्यचश्च ।
२६ सिन्धवपकाराभ्यां कन् अणञौ च ।
२७ युष्मदस्मदोश्चादेशाः ।

**स्वरितेनाधिकारः ॥ ११ ॥**

१ अधिकारः प्रतियोगं तस्यानिर्देशार्थः ।
२ न वा निर्दिश्यमानाधिकृतत्वाद्यथा लोके ।
३ अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा ।
४ अधिकारपरिमाणाज्ञानं तु ।
५ अधिकारपरिमाणाज्ञानार्थं तु नाधिकार इति चेदुक्तम् ।
६ यावतिथोऽलनुबन्धस्तावतो योगाननतिवचनात्सिद्धम् ।
७ भूयसि प्राग्वचनम् ।

**अनुदात्तङित आत्मनेपदम् ॥ १२ ॥**

१ आत्मनेपदवचनं नियमार्थम् ।
२ लविधानाद्विहितम् ।
३ तत्र प्रत्ययनियमे शेषवचनं परस्मैपदस्यानिवृत्तत्वात् ।
४ क्यष आत्मनेपदवचनं तस्यान्यत्र नियमात् ।
५ प्रकृत्यर्थनियमेऽन्याभावः ।
६ शेषवचनं च ।
७ कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थम्[१] ।

**भावकर्मणोः ॥ १३ ॥**

**कर्तरि कर्मव्यतिहारे ॥ १४ ॥**

१ कर्मव्यतिहारादिषु कर्तृग्रहणं भावकर्मनिवृत्त्यर्थम् ।
३ न वानन्तरस्य प्रतिषेधात्[२] ।

**न गतिहिंसार्थेभ्यः ॥ १५ ॥**

१ प्रतिषेधे हसादीनामुपसंख्यानम् ।
२ हरिवह्योरप्रतिषेधः ।

---

१ प. पुस्तके इतः परं नास्ति । २ प. पुस्तके इतः परमधिकम् । विकरणेभ्यः प्रतिषेधः । ३ प. पुस्तके इतः परमधिकम् । क्रियाव्यतिहार इति वक्तव्यम् ।

**इतरेतरान्योऽन्योपपदाच्च ॥ १६ ॥**

१ परस्परोपपदाच्च ।

**नेर्विशः ॥ १७ ॥**

**परिव्यवेभ्यः क्रियः ॥ १८ ॥**

**विपराभ्यां जेः ॥ १९ ॥**

**आङो दोऽनास्यविहरणे ॥ २० ॥**

१ आङो दोऽव्यसनक्रियस्य ।

२ स्वाङ्गकर्मकाच्च ।

**क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥**

१ समोऽकूजने ।

२ आगमेः क्षमायाम् ।

३ शिक्षेर्जिज्ञासायाम् ।

४ किरतेर्हर्षजीविकाकुलायकरणेषु ।

५ हरतेर्गतताच्छील्ये ।

६ आङि नुप्रच्छ्योः ।

७ आशिषि नाथः ।

८ शप उपलम्भने ।

**समवप्रविभ्यः स्थः ॥ २२ ॥**

१ आङः स्थः प्रतिज्ञाने ।

**प्रकाशनस्थेयाख्ययोश्च ॥ २३ ॥**

**उदोऽनूर्ध्वकर्मणि ॥ [२]४ ॥**

१ उद ईहायाम् ।

**उपान्मन्त्रकरणे ॥ २५ ॥**

१ उपाद्देवपूजासंगतकरणयोः[1] ।

२ वा लिप्सायाम् ।

**अकर्मकाच्च ॥ २६ ॥**

**उद्विभ्यां तपः ॥ २७ ॥**

१ स्वाङ्गकर्मकाच्च ।

**आङो यमहनः ॥ २८ ॥**

**समो गम्यृच्छिभ्याम् ॥ २९ ॥**

१ समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् ।

२ अर्तिश्रुदृशिभ्यश्च ।

३ उपसर्गादस्यत्यूह्योर्वावचनम् ।

**निसमुपविभ्यो ह्वः ॥ ३० ॥**

**स्पर्धायामाङः ॥ ३१ ॥**

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥**

**अधेः प्रसहने ॥ ३३ ॥**

**वेः शब्दकर्मणः ॥ ३४ ॥**

**अकर्मकाच्च ॥ ३५ ॥**

**संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३६ ॥**

**कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥**

**वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥**

**उपपराभ्याम् ॥ ३९ ॥**

**आङ उद्गमने ॥ ४० ॥**

१ ज्योतिषामुद्गमने ।

**वेः पादविहरणे ॥ ४१ ॥**

**प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥**

**अनुपसर्गाद्वा ॥ ४३ ॥**

**अपह्नवे ज्ञः ॥ ४४ ॥**

**अकर्मकाच्च ॥ ४५ ॥**

**संप्रतिभ्यामनाध्याने ॥ ४६ ॥**

---

१ प. पुस्तके इतः परमधिकम् । उपसर्गग्रहणम् । २ प. पुस्तके इतः परमधिकम् । °मित्रकरण इत्यपि वक्तव्यमित्यपर आह ।

**भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥**

**व्यक्तवाचां समुच्चारणे ॥ ४८ ॥**

**अनोरकर्मकात् ॥ ४९ ॥**

**विभाषा विप्रलापे ॥ ५० ॥**

**अवाद्ग्रः ॥ ५१ ॥**

१ अवाद्ग्रो गिरतेः ।

**समः प्रतिज्ञाने ॥ ५२ ॥**

**उदश्चरः सकर्मकात् ॥ ५३ ॥**

**समस्तृतीयायुक्तात् ॥ ५४ ॥**

**दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥**

**उपाद्यमः स्वकरणे ॥ ५६ ॥**

**ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥**

**नानोर्ज्ञः ॥ ५८ ॥**

१ अनोर्ज्ञः प्रतिषेधे सकर्मकवचनम् ।

२ न वाकर्मकस्योत्तरेण विधानात् ।

३ प्रतिषेधः पूर्वस्य च ।

**प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥**

**शदेः शितः ॥ ६० ॥**

१ शदे शितः परस्मैपदाश्रयत्वादात्मनेपदाभावः ।

२ सिद्धं तु लडादीनामात्मनेपदवचनात् ।

३ उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानम् ।

४ नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदटोऽपि नित्यनिमित्तत्वादात्मनेपदाभावः ।

५ तस्मादुपसंख्यानम् ।

**म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥**

**पूर्ववत्सनः ॥ ६२ ॥**

१ पूर्ववत्सन इति शदिम्रियत्यर्थम् ।

२ इतरथा हि ताभ्यां सनन्ताभ्यामात्मनेपदप्रतिषेधः ।

३ पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेद्रुपादिष्वप्रसिद्धिः ।

४ सिद्धं तु पूर्वस्य लिङ्गातिदेशात् ।

५ कृञादिषु तु लिङ्गप्रतिषेधः ।

६ प्रत्ययग्रहणं णियगर्थम् ।

७ तत्र हेतुमण्णिचः प्रतिषेधः ।

**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ ६३ ॥**

**प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥**

**समः क्ष्णुवः ॥ ६५ ॥**

१ समः क्ष्णुवः सकर्मकार्थम्[1] ।

**भुजोऽनवने ॥ ६६ ॥**

**णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने**

१ णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः ।

२ इतरथा हि सर्वप्रसङ्गः ।

३ कर्मकर्तृत्वात्सिद्धमिति चेद्यक्चिणोर्निवृत्त्यर्थं वचनम् ।

४ न वा यक्चिणोः प्रतिषेधात् ।

५ इतरथा हि यत्र नियमस्ततोऽन्यत्र प्रतिषेधः ।

६ आत्मनेपदस्य च ।

---

१ प. पुस्तके इतःपरमधिकम् । स्वराद्युपसृष्टादिति वक्तव्यम् । स्वराद्युन्तोसृष्टादिति वक्तव्यम् । २ प. पुस्तके इतः परमाधिकम् । अनवनकौटिल्ययोरिति वक्तव्यम् ।

७ आत्मनेपदप्रतिषेधार्थं तु ।
८ आत्मनः कर्मत्वे प्रतिषेधः ।
९ न वा ण्यन्तेऽन्यस्य कर्तृत्वात् ।

**भीस्म्योर्हेतुभये ॥ ६८ ॥**

**गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥**

**लियः संमाननशालीनीकरणयोश्च ॥७०॥**

**मिथ्योपपदात्कृञोऽभ्यासे ॥ ७१ ॥**

**स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥७२॥**

**अपाद्वदः ॥ ७३ ॥**

**णिचश्च ॥ ७४ ॥**

**समुदाङ्भ्यो यमो ऽग्रन्थे ॥ ७५ ॥**

**अनुपसर्गाज्ज्ञः ॥ ७६ ॥**

**विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥**

**शेषात्कर्तरि परस्मैपदम् ॥ ७८ ॥**

१ शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधः ।
२ सप्तम्या चेत्प्रकृतेः ।
३ सिद्धं तूभयनिर्देशात् ।
४ कर्तृग्रहणमनुष्यपराद्यर्थम् ।

**अनुपराभ्यां कृञः ॥ ७९ ॥**

१ परस्मैपदप्रतिषेधात्कृञादिषु विधानम्[1] ।
२ तत्रात्मनेपदप्रतिषेधोऽप्रतिषिद्धत्वात् ।
३ न वा युतादिभ्यो वावचनात् ।
४ आत्मनेपदनियमे वा प्रतिषेधः ।

**अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥**

**प्राद्वहः ॥ ८१ ॥**

**परेर्मृषः ॥ ८२ ॥**

**व्याङ्परिभ्यो रमः ॥ ८३ ॥**

**उपाच्च ॥ ८४ ॥**

**विभाषाकर्मकात् ॥ ८५ ॥**

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥**

**निगरणचलनार्थेभ्यश्च ॥ ८७ ॥**

**अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥**

१ अणावकर्मकादिति चुरादिणिचोऽण्यन्तात्परस्मैपदवचनम् ।
२ सिद्धं त्वतसिण्णाविति वचनात् ।

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ८९ ॥**

**वा क्यषः ॥ ९० ॥**

**द्युद्भ्यो लुङि ॥ ९१ ॥**

**वृद्भ्यः स्यसनोः ॥ ९२ ॥**

**लुटि च क्लृपः ॥ ९३ ॥**

१ पादिषु धेट उपसंख्यानम्[2] ।

॥ प्रथमाध्यायस्य तृतीयः पादः ॥

**आ कडारादेका संज्ञा ॥ १ ॥**

१ अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् ।
२ तत्रैकसंज्ञाधिकारे तद्वचनम् ।
३ अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः ।
४ कर्मधारयत्वे तत्पुरुषग्रहणम्[3] ।
५ तत्पुरुषत्वे द्विगुचग्रहणम् ।
६ गतिदिवःकर्महेतुमत्सु च ग्रहणम् ।
७ गुरुलघुसंज्ञे नदीघिसंज्ञे ।
८ परस्मैपदसंज्ञा पुरुषसंज्ञा ।
९ परवचने सिति पदं भम् ।

---

१ प. पुस्तके विधानस्य स्थाने वचनमिति । २ प. पुस्तके इतः परमाधिकम् । अदेः प्रतिषेधो वक्तव्यः । ३ प. पुस्तके कर्मधारय तत्पुरुषग्रहणामिति ।

१० गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञम् ।
११ शेषवचनं च घिसंज्ञानिवृत्त्यर्थम् ।
१२ न वा संभवात् ।
१३ ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः ।
१४ तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभावः ।
१५ आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेद्यणादेशाभावः ।
१६ नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः ।
१७ बहुव्रीह्यर्थं तु
१८ प्रयोजनमव्ययीभावोपमानद्विगुकृल्लोपेषु ।
१९ तत्र शेषवचनाद्दोषः संख्या समानाधिकरणनञ्समासेषु बहुव्रीहिप्रतिषेधः ।
२० कृल्लोपे च शेषवचनात्प्रादिभिर्न बहुव्रीहिः[1] ।
२१ एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् क्तार्थे प्रतिषेधः ।
२२ तत्पुरुष इति चेदन्यत्र क्तार्थात्प्रतिषेधः ।
२३ सिद्धं तु प्रादीनां क्तार्थे तत्पुरुषवचनात् ।
२४ प्रयोजनं ह्रस्वसंज्ञां दीर्घप्लुतौ ।
२५ तिङ्सार्वधातुकं लिङ्लिटोरार्धधातुकम् ।
२६ अपत्यं वृद्धं युवा ।
२७ विं नदी ।
२८ लघु गुरु ।
२९ पदं भम् ।
३० अपादानमुत्तराणि धनुषा विध्यति कंसपात्र्यां भुङ्क्ते गां दोग्धि धनुर्विध्यतीति ।
३१ क्रुधद्रुहोरुपसृष्टयोः कर्म संप्रदानम् ।
३२ करणं पराणि साध्वसिश्छिनत्ति ।
३३ अधिकरणं कर्म गेहं प्रविशति ।
३४ अधिकरणं कर्ता । स्थाली पचति ।
३५ अध्युपसृष्टं कर्म ।
३६ गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा ।
३७ परस्मैपदमात्मनेपदम् ।
३८ समाससंज्ञाश्च ।
३९ अर्थवत्प्रातिपदिकम् ।
४० गुणवचनं च[6] ।
४१ समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः ।
४२ संख्या ।
४३ डु च ।
४४ एकद्रव्योपनिवेशिनी संज्ञा ।

**विप्रतिषेधे परं कार्यम् ॥ २ ॥**

१ द्वौ प्रसङ्गावन्यार्थावेकस्मिन्स विप्रतिषेधः
२ एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तेरुभयप्रसङ्गः ।
३ तृजादिभिस्तुल्यम् ।
४ अनवयवप्रसङ्गात्प्रतिपदं विधेश्च ।

१ प. पुस्तकेऽइतः परमधिकम् । एक संज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिः । २-५ प. पुस्तके इतः नास्ति। ६ प. पुस्तके च स्थाने विति ।

१०११ अद भक्षणे । १०१२ हन हिंसागत्योः ॥ अनुदात्तावुदात्तेतौ परस्मैपदिनौ ॥ १०१३ द्विष अप्रीतौ । १०१४ दुह प्रपूरणे । १०१५ दिह उपचये । १०१६ लिह आस्वादने ॥ द्विषादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः॥ १०१७ चक्षिङ् व्यक्तायां वाचि । दर्शनेऽपि ॥ अनुदात्तोऽनुदात्तेदात्मनेपदी ॥ १०१८ ईर गतौ कम्पने च । १०१९ ईड स्तुतौ । १०२० ईश ऐश्वर्ये । १०२१ आस उपवेशने । १०२२ आङ्शासु इच्छायाम् । १०२३ वस आच्छादने । १०२४ कासि गतिशासनयोः ॥ कस इत्येके । कश इत्यपि ॥ १०२५ णिसि चुम्बने । १०२६ णिजि शुद्धौ । १०२७ शिजि अव्यक्ते शब्दे । १०२८ पिजि वर्णे ॥ संपर्चन इत्येके । उभयत्रेत्यन्ये । अवयव इत्येके । अव्यक्ते शब्द इतीतरे । पृजि इत्येके ॥ १०२९ वृजी वर्जने ॥ वृजि इत्यन्ये ॥ १०३० पृची संपर्चने ॥ ईरादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ १०३१ षूङ् प्राणिगर्भविमोचने । १०३२ शीङ् स्वप्ने ॥ उदात्तावात्मनेभाषौ । १०३३ यु मिश्रणेऽमिश्रणे च । १०३४ रु शब्दे । १०३५ णु स्तुतौ । १०३६ टुक्षु शब्दे । १०३७ क्ष्णु तेजने । १०३८ ष्णु प्रस्रवणे ॥ युप्रभृतय उदात्ता उदात्तेतः परस्मैभाषाः ॥ १०३९ उर्णुञ् आच्छादने ॥उदात्त उभयतोभाषः ॥ १०४० द्यु अभिगमने । १०४१ षु प्रसवैश्वर्ययोः । १०४२ कु शब्दे । १०४३ ष्टुञ् स्तुतौ ॥ द्युप्रभृतयोऽनुदात्ताः परस्मैभाषाः। स्तौतिस्तूभयतोभाषः ॥ १०४४ ब्रूञ् व्यक्तायां वाचि ॥ उदात्त उभयतोभाषः ॥ १०४५ इण् गतौ । १०४६ इङ् अध्ययने । १०४७ इक् स्मरणे । १०४८ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । १०४९ या प्रापणे । १०५० वा गतिगन्धनयोः । १०५१ भा दीप्तौ । १०५२ ष्णा शौचे । १०५३ श्रा पाके । १०५४ द्रा कुत्सायां गतौ । १०५५ प्सा भक्षणे । १०५६ पा रक्षणे । १०५७ रा दाने । १०५८ ला आदाने ॥ द्वावपि दान इति चन्द्रः ॥ १०५९ दाप् लवने । १०६० ख्या प्रकथने । १०६१ प्रा पूरणे । १०६२ मा माने । १०६३ वच परिभाषणे ॥ इणप्रभृतयोऽनुदात्ताः परस्मैभाषाः। इङ् त्वात्मनेपदी ॥ १०६४ विद ज्ञाने । १०६५ अस भुवि । १०६६ मृजू शुद्धौ । १०६७ रुदिर् अश्रुविमोचने ॥ विदादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ १०६८ ञिष्वप् शये ॥ उदात्तः परस्मैभाषः । १०६९ श्वस प्राणने । १०७० अन च । १०७१ जक्ष भक्षहसनयोः ॥ वृत् ॥ १०७२ जागृ निद्राक्षये । १०७३ दरिद्रा दुर्गतौ । १०७४ चकासृ दीप्तौ । १०७५ शासु अनुशिष्टौ । श्वसादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ १०७६ दिधीङ् दीप्तिदेवनयोः । १०७७ वेवीङ् वेतिना तुल्ये ॥ उदात्तावात्मनेभाषौ ॥ १०७८ षस १०७९ सस्ति स्वप्ने । १०८० वश कान्तौ ॥ षसादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ १०८१ चर्करीतं च । १०८२

ह्नुङ् अपनयने ॥ अनुदात्ता आत्मनेभाषाः ॥ इति लुग्विकरणा अदादयः ॥ २ ॥

१०८३ हु दानादानयोः ॥ आदाने चेत्येके ॥ १०८४ ञिभी भये । १०८५ ह्री लज्जायाम् ॥ जुहोत्यादयोऽनुदात्ताः परस्मैभाषाः ॥ १०८६ पॄ पालनपूरणयोः ॥ पृ इत्येके ॥ उदात्तः परस्मैभाषः ॥ १०८७ डुभृञ् धारणपोषणयोः ॥ अनुदात्त उभयतोभाषः ॥ १०८८ माङ् माने शब्दे च । १०८९ ओहाङ् गतौ ॥ अनुदात्तावात्मनेपदिनौ ॥ १०९० ओहाक् त्यागे ॥ अनुदात्तः परस्मैपदी ॥ १०९१ डुदाञ् दाने ॥ १०९२ डुधाञ् धारणपोषणयोः ॥ दान इत्यप्येके ॥ अनुदात्तावुभयतोभाषौ ॥ १०९३ णिजिर् शौचपोषणयोः । १०९४ विजिर् पृथग्भावे । १०९५ विष्लृ व्याप्तौ ॥ णिजिरादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः ॥ १०९६ घृ क्षरणदीप्त्योः । १०९७ हृ प्रसह्यकरणे । १०९८ ऋ १०९९ सृ गतौ ॥ घृप्रभृतयोऽनुदात्ताः परस्मैभाषाः ॥ ११०० भस भर्त्सनदीप्त्योः ॥ उदात्त उदात्तेत् परस्मैपदी ॥ ११०१ कि ज्ञाने ॥ अनुदात्तः परस्मैपदी ॥ ११०२ तुर त्वरणे । ११०३ धिष शब्दे । ११०४ धन धान्ये । ११०५ जन जनने ॥ तुरादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ ११०६ गा स्तुतौ ॥ अनुदात्तः परस्मैभाषः । घृप्रभृतय एकादश च्छन्दसि । इयर्ति भाषायामपि ॥ इति श्लुविकरणा जुहोत्यादयः ॥ ३ ॥

११०७ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु । ११०८ षिवु तन्तुसंताने । ११०९ स्रिवु गतिशोषणयोः । १११० ष्ठिवु निरसने । ११११ ष्णुसु अदने ॥ आदान इत्येके । अदर्शन इत्यपरे ॥ १११२ ष्णसु निरसने । १११३ क्नसु ह्वरणदीप्त्योः । १११४ व्युष दाहे । १११५ प्लुष च । १११६ नृती गात्रविक्षेपे । १११७ त्रसी उद्वेगे । १११८ कुथ पूतीभावे । १११९ पुथ हिंसायाम् । ११२० गुध परिवेष्टने । ११२१ क्षिप प्रेरणे ११२२ पुष्प विकसने । ११२३ तिम ११२४ ष्टिम ११२५ ष्टीम आर्द्रीभावे । ११२६ व्रीड चोदने लज्जायां च । ११२७ इष गतौ । ११२८ षह ११२९ षुह चक्यर्थे । ११३० जॄष् ११३१ झॄष् वयोहानौ ॥ दिवादय उदात्ता उदात्तेतः परस्मैभाषाः । क्षिपिस्त्वनुदात्तः ॥ ११३२ षूङ् प्राणिप्रसवे । ११३३ दूङ् परितापे ॥ उदात्तावात्मनेभाषौ ॥ ११३४ दीङ् क्षये । ११३५ डीङ् विहायसा गतौ । ११३६ धीङ् आधारे । ११३७ मीङ् हिंसायाम् । ११३८ रीङ् श्रवणे । ११३९ लीङ् श्लेषणे । ११४० व्रीङ् वृणोत्यर्थे ॥ वृत् । स्वादय ओदितः ॥ ११४१ पीङ् पाने । ११४२ माङ् माने । ११४३ ईङ् गतौ । ११४४ प्रीङ् प्रीतौ ॥ दीङादय आत्मनेपदिनोऽनुदात्ताः । डीङ् तूदात्तः ॥ ११४५ शो तनूकरणे । ११४६ छो छेदने । ११४७ षो अन्तकर्मणि । ११४८ दो अव-

खण्डने ॥ श्यतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः ॥ ११४९ जनी प्रादुर्भावे । ११५० दीपी दीप्तौ । ११५१ पूरी आप्यायने । ११५२ तूरी गतित्वरणहिंसनयोः । ११५३ धूरी ११५४ गूरी हिंसागत्योः । ११५५ घूरी ११५६ जूरी हिंसावयोहान्योः । ११५७ शूरी हिंसास्तम्भनयोः । ११५८ चूरी दाहे । ११५९ तप ऐश्वर्ये वा । ११६० वृतु वरणे । ११६१ क्लिश उपतापे । ११६२ काशृ दीप्तौ । ११६३ वाशृ शब्दे ॥ जन्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः । तपिस्त्वनुदात्तः ॥ ११६४ मृष तितिक्षायाम् । ११६६ शुचिर् पूतीभावे । उदात्तौ स्वरितेतावुभयतोभाषौ ॥ ११६७ णह बन्धने । ११६८ रन्ज रागे । ११६९ शप आक्रोशे ॥ णहादयस्त्रयोऽनुदात्ताः स्वरितेत उभयतोभाषाः ॥ ११७० पद गतौ । ११७१ खिद दैन्ये । ११७२ विद सत्तायाम् । ११७३ बुध अवगमने । ११७४ युध संप्रहारे । ११७५ अनोरुध कामे । ११७६ अण प्राणने ॥ अन इत्येके ॥ ११७७ मन ज्ञाने । ११७८ युज समाधौ । ११७९ सृज विसर्गे । ११८० लिश अल्पीभावे ॥ पदादयोऽनुदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ११८१ राधोऽकर्मकाद्वृद्धावेव । ११८२ व्यध ताडने । ११८३ पुष पुष्टौ । ११८४ शुष शोषणे । ११८५ तुष प्रीतौ । ११८६ दुष वैकृत्ये । ११८७ श्लिष आलिङ्गने । ११८८ शक विभाषितो मर्षणे । ११८९ ष्विदा गात्रप्रक्षरणे ॥ ११९० क्रुध क्रोधे । ११९१ क्षुध बुभुक्षायाम् । ११९२ शुध शौचे । ११९३ षिधु संराद्धौ । राधादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ॥ ११९४ रध हिंसासंराध्योः । ११९५ णश अदर्शने । ११९६ तृप प्रीणने । ११९७ दृप हर्षमोहनयोः । ११९८ द्रुह जिघांसायाम् । ११९९ मुह वैचित्त्ये । १२०० ष्णुह उद्गिरणे । १२०१ ष्णिह प्रीतौ ॥ वृत् । रधादय उदात्ता उदात्तेतः परस्मैभाषाः॥ १२०२ शमु उपशमे । १२०३ तमु काङ्क्षायाम् । १२०४ दमु उपशमे । १२०५ श्रमु तपसि खेदे च । १२०६ भ्रमु अनवस्थाने । १२०७ क्षमू सहने । १२०८ क्लमु ग्लानौ । १२०९ मदी हर्षे ॥ वृत् ॥ १२१० असु क्षेपणे । १२११ यसु प्रयत्ने । १२१२ जसु मोक्षणे । १२१३ तसु उपक्षये । १२१४ दसु च । १२१५ वसु स्तम्भे । १२१६ व्युष विभागे ॥ व्युस इत्यन्ये । युस इत्यपरे ॥ १२१७ प्लुष दाहे । १२१८ विस प्रेरणे । १२१९ कुस संश्लेषणे । १२२० बुस उत्सर्गे । । १२२१ मुस खण्डने । १२२२ मसी परिणामे ॥ समी इत्येके ॥ १२२३ लुठ विलोडने । १२२४ उच समवाये । १२२५ भृशु १२२६ भ्रन्शु अधःपतने । १२२७ वृश वरणे । १२२८ कृश तनूकरणे । १२२९ ञितृष पिपासायाम् । १२३० हृष तुष्टौ । १२३१ रुष १२३२ रिष हिंसायाम् । १२३३ डिप क्षेपे ।

१२३४ कुप क्रोधे । १२३५ गुप व्याकुलत्वे । १२३६ युपु १२३७ रुपु १२३८ लुपु विमोहने । १२३९ लुभ गार्ध्ये । १२४० क्षुभ संचलने । १२४१ णभ १२४२ तुभ हिंसायाम् ॥ क्षुभिनभितुभयो द्युतादौ क्र्यादौ च पठ्यन्ते ॥ १२४३ क्लिद आर्द्रीभावे । १२४४ ञिमिदा स्नेहने । १२४५ ञिक्ष्विदा स्नेहनमोचनयोः । १२४६ ऋधु वृद्धौ । १२४७ गृधु अभिकाङ्क्षायाम् ॥ वृत् । असुप्रभृतय उदात्ता उदात्तेतः परस्मैभाषाः । इति श्यन्विकरणा दिवादयः ॥ ४ ॥

१२४८ षुञ् अभिषवे । १२४९ षिञ् बन्धने । १२५० शिञ् निशाने । १२५१ डुमिञ् प्रक्षेपणे । १२५२ चिञ् चयने । १२५३ स्तृञ् आच्छादने । १२५४ कृञ् हिंसायाम् । १२५५ वृञ् वरणे । १२५६ धुञ् कम्पने । धूञ् इत्येके ॥ स्वादयोऽनुदात्ता उभयतोभाषाः । वृञ् उदात्तः ॥ १२५७ टुदु उपतापे । १२५८ हि गतौ वृद्धौ च । १२५९ पृ प्रीतौ । १२६० स्पृ प्रीतिपालनयोः ॥ प्रीतिचलनयोः इत्यन्ये । स्मृ इत्येके ॥ १२६१ आप्लृ व्याप्तौ । १२६२ शक्लृ शक्तौ । १२६३ राध १२६४ साध संसिद्धौ । दुनोतिप्रभृतयोऽनुदात्ताः परस्मैभाषाः ॥ १२६५ अशू व्याप्तौ संघाते च । १२६६ ष्टिघ आस्कन्दने ॥ आशिस्तिघी उदात्तावनुदात्तेतावात्मनेभाषौ ॥ १२६७ तिक १२६८ तिग गतौ च । १२६९ षघ हिंसायाम् । १२७० ञिधृषा प्रागल्भ्ये । १२७१ दन्भु दम्भने । १२७२ ऋधु वृद्धौ । तृप प्रीणने इत्येके ॥ छन्दसि ॥ १२७३ अह व्याप्तौ । १२७४ दघ घातने पालने च । १२७५ चमु भक्षणे । १२७६ रि १२७७ क्षि १२७८ चिरि १२७९ जिरि १२८० दाश १२८१ दृ हिंसायाम् ॥ क्षिर भाषायाम् इत्येके । ऋक्षीत्यजादिरेके । रेफवानित्यन्ये ॥ वृत् । तिकादय उदात्ता उदात्तेतः परस्मैभाषाः॥ इति श्नुविकरणाः स्वादयः ॥५॥

१२८२ तुद व्यथने । १२८३ णुद प्रेरणे । १२८४ दिश अतिसर्जने । १२८५ भ्रस्ज पाके । १२८६ क्षिप प्रेरणे । १२८७ कृष विलेखने ॥ तुदादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः ॥ १२८८ ऋषी गतौ ॥ उदात्त उदात्तेत्परस्मैपदी ॥ १२८९ जुषी प्रीतिसेवनयोः । १२९० ओविजी भयचलनयोः । १२९१ ओलजी १२९२ ओलस्जी व्रीडने ॥ जुषादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ११९३ ओव्रश्चू छेदने । १२९४ व्यच व्याजीकरणे । १२९५ उछि उञ्छे । १२९६ उछी विवासे । १२९७ ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु । १२९८ मिछ उत्क्लेशे । १२९९ जर्ज १३०० चर्च १३०१ झर्झ परिभाषणभर्त्सनयोः । १३०२ त्वच संवरणे । १३०३ ऋच स्तुतौ । १३०४ उब्ज आर्जवे । १३०५ उज्झ उत्सर्गे । १३०६ लुभ विमोहने । १३०७ रिफ कत्थनयुद्धनिंदाहिंसादानेषु ॥

रिह इत्येके ॥ १३०८ तृप १३०९ तृन्फ तृप्तौ ॥ द्वावपि फान्तावित्येके ॥ १३१० तुप १३११ तुन्प १३१२ तुफ १३१३ तुन्फ हिंसायाम् । १३१४ दृप १३१५ दृन्फ उत्क्लेशे ॥ प्रथमोऽपि द्वितीयान्त इत्येके ॥ १३१६ ऋफ १३१७ ऋन्फ हिंसायाम् । १३१८ गुफ १३१९ गुन्फ ग्रन्थे । १३२० उभ १३२१ उन्भ पूरणे । १३२२ शुभ १३२३ शुन्भ शोभार्थे । १३२४ दृभी ग्रन्थे । १३२५ चृती हिंसाग्रन्थनयोः । १३२६ विध विधाने । १३२७ जुड गतौ ॥ जुन इत्येके ॥ १३२८ मृड सुखने । १३२९ पृड च । १३३० पृण प्रीणने । १३३१ वृण च । १३३२ मृण हिंसायाम् । १३३३ तुण कौटिल्ये । १३३४ पुण कर्मणि शुभे । १३३५ मुण प्रतिज्ञाने ॥ १३३६ कुण शब्दोपकरणयोः । १३३७ शुन गतौ । १३३८ द्रुण हिंसागतिकौटिल्येषु । १३३९ घुण १३४० घूर्ण भ्रमणे । १३४१ षुर ऐश्वर्यदीप्त्योः । १३४२ कुर शब्दे । १३४३ खुर छेदने । १३४४ मुर संवेष्टने । १३४५ क्षुर विलेखने । १३४६ घुर भीमार्थशब्दयोः । १३४७ पुर अग्रगमने । १३४८ वृहू उद्यमने ॥ बृहू इत्यन्ये ॥ १३४९ तृहू १३५० स्तृहू १३५१ तृन्हू हिंसार्थाः । १३५२ इष इच्छायाम् । १३५३ मिष स्पर्धायाम् । १३५४ किल श्वैत्यक्रीडनयोः । १३५५ तिल स्नेहे । १३५६ चिल वसने । १३५७ चल विलसने । १३५८ इल स्वप्नक्षेपणयोः । १३५९ विल संवरणे । १३६० बिल भेदने । १३६१ णिल गहने । १३६२ हिल भावकरणे १३६३ शिल १३६४ षिल उञ्छे । १३६५ मिल श्लेषणे । १३६६ लिख अक्षरविन्यासे । १३६७ कुट कौटिल्ये । १३६८ पुट संश्लेषणे । १३६९ कुच संकोचने । १३७० गुज शब्दे । १३७१ गुड रक्षायाम् । १३७२ डिप क्षेपे । १३७३ छुर छेदने । १३७४ स्फुट विकसने । १३७५ मुट आक्षेपमर्दनयोः । १३७६ त्रुट छेदने । १३७७ तुट कलहकर्मणि । १३७८ चुट १३७९ छुट छेदने । १३८० जुट बन्धने । १३८१ कड मदे । १३८२ लुट संश्लेषणे १३८३ कृड घनत्वे । १३८४ कुड बाल्ये । १३८५ पुड उत्सर्गे । १३८६ घुट प्रतिघाते । १३८७ तुड तोडने । १३८८ थुड १३८९ स्थुड संवरणे ॥ खुड छुड इत्येके ॥ १३९० स्फुर १३९१ स्फुल संचलने ॥ स्फुर स्फुरणे स्फुल संचलने इत्येके । स्फर इत्यन्ये ॥ १३९२ स्फुड १३९३ चुड १३९४ व्रुड संवरणे ॥ १३९५ क्रुड १३९६ मृड निमज्जन इत्येके ॥ व्रश्चादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ १३९७ गुरी उद्यमने ॥ उदात्तोऽनुदात्तेदात्मनेपदी ॥ १३९८ णू स्तवने । १३९९ धू विधूनने ॥ उदात्तौ परस्मैभाषौ ॥ १४०० गु पुरीषोत्सर्गे । १४०१ ध्रु गतिस्थैर्ययोः ॥ ध्रुव इत्येके ॥ अनुदात्तौ परस्मैपदिनौ ॥ १४०२ कुङ् शब्दे ॥ उदात्त आत्मनेपदी ॥ दीर्घान्त इति

कैयटादयः । ह्रस्वान्त इति न्यासः ॥ वृत् ॥ १४०३ पृङ् व्यायामे । १४०४ मृङ् प्राणत्यागे ॥ अनुदात्तावात्मनेभाषौ ॥ १४०५ रि १४०६ पि गतौ । १४०७ धि धारणे । १४०८ क्षि निवासगत्योः ॥ रियत्यादयोऽनुदात्ताः परस्मैभाषाः ॥ १४०९ षू प्रेरणे । १४१० कॄ विक्षेपे । १४११ गॄ निगरणे । उदात्ताः परस्मैभाषाः॥ १४१२ दृङ् आदरे । १४१३ धृङ् अवस्थाने ॥ अनुदात्तावात्मनेभाषौ ॥ १४१४ प्रच्छ ज्ञीप्सायाम् ॥ वृत् ॥ १४१५ सृज विसर्गे । १४१६ टुमस्जो शुद्धौ । १४१७ रुजो भङ्गे । १४१८ भुजो कौटिल्ये । १४१९ छुप स्पर्शे । १४२० रुश १४२१ रिश हिंसायाम् । १४२२ लिश गतौ । १४२३ स्पृश संस्पर्शने । १४२४ विच्छ गतौ । १४२५ विश प्रवेशने । १४२६ मृश आमर्शने । १४२७ णुद प्रेरणे । १४२८ षदॢ विशरणगत्यवसादनेषु । १४२९ शदॢ शातने ॥ प्रच्छत्यादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ॥ विछस्तूदात्तः ॥ १४३० मिल संगमे ॥ उदात्तः स्वरितेदुभयतोभाषः॥ १४३१ मुच्ॡ मोक्षणे । १४३२ लुप्ॡ छेदने । १४३३ विदॢ लाभे । १४३४ लिप उपदेहे । १४३५ षिच क्षरणे ॥ मुचादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः । विन्दतिस्तूदात्तः ॥ १४३६ कृती छेदने ॥ उदात्त उदात्तेत्परस्मैपदी ॥ १४३७ खिद परिघाते ॥ अनुदात्त उदात्तेत्परस्मैपदी ॥ १४३८ पिश अवयवे ॥ उदात्त उदात्तेत्परस्मैपदी ॥ वृत् ॥ इति शविकरणास्तुदादयः ॥ ६ ॥

१४३९ रुधिर् आवरणे । १४४० भिदिर् विदारणे । १४४१ छिदिर् द्वैधीकरणे । १४४२ रिचिर् विरेचने । १४४३ विचिर् पृथग्भावे । १४४४ क्षुदिर् संपेषणे । १४४५ युजिर् योगे ॥ रुधादयोऽनुदात्ताः स्वरितेत उभयतोभाषाः ॥ १४४६ उछृदिर् दीप्तिदेवनयोः । १४४७ उतृदिर् हिंसानादरयोः॥ उदात्तौ स्वरितेतावुभयतोभाषौ ॥ १४४८ कृती वेष्टने ॥ उदात्त उदात्तेत्परस्मैपदी ॥ १४४९ ञिइन्धी दीप्तौ ॥ उदात्तोऽनुदात्तेदात्मनेपदी ॥ १४५० खिद दैन्ये । १४५१ विद विचारणे ॥ अनुदात्तावनुदात्तेतावात्मनेपदिनौ ॥ १४५२ शिषॢ विशेषणे । १४५३ पिषॢ संचूर्णने । १४५४ भन्जो आमर्दने । १४५५ भुज पालनाभ्यवहारयोः॥ शिषादयोऽनुदात्ता उदात्तेतः परस्मैभाषाः ॥ १४५६ तृह १४५७ हिंसि हिंसायाम् । १४५८ उन्दी क्लेदने । १४५९ अञ्जू व्यक्तिमर्षणकान्तिगतिषु । १४६० तन्चु संकोचने । १४६१ ओविजी भयचलनयोः। १४६२ वृजी वर्जने । १४६३ पृची संपर्के । तृहादय उदात्ता उदात्तेतः परस्मैपदिनः ॥ वृत् ॥ इति श्नम्विकरणा रुधादयः ॥७॥

१४६४ तनु विस्तारे । १४६५ षणु दाने । १४६६ क्षणु हिंसायाम् । १४६७ क्षिणु च । १४६८ ऋणु गतौ । १४६९ तृणु अदने । १४७० घृणु दीप्तौ ॥ तनादय

उदात्तः स्वरितेत उभयतोभाषाः ॥ १४७१ मनु याचने । १४७२ मनु अवबोधने ॥ उदात्तावनुदात्तेतावात्मनेभाषौ ॥ १४७३ डुकृञ् करणे ॥ अनुदात्त उभयतोभाषः ॥ इत्युविकरणास्तनादयः ॥ ८ ॥

१४७४ डुक्रीञ् द्रव्यविनिमये । १४७५ प्रीञ् तर्पणे कान्तौ च । १४७६ श्रीञ् पाके । १४७७ मीञ् हिंसायाम् । १४७८ षिञ् बन्धने । १४७९ स्कुञ् आप्रवणे । १४८० युञ् बन्धने ॥ क्रयादयोऽनुदात्ता उभयतोभाषाः ॥ १४८१ क्नूञ् शब्दे । १४८२ द्रूञ् हिंसायाम् । १४८३ पूञ् पवने । १४८४ लूञ् छेदने । १४८५ स्तॄञ् आच्छादने । १४८६ कॄञ् हिंसायाम् । १४८७ वृञ् वरणे । १४८८ धूञ् कम्पने ॥ क्रूप्रभृतय उदात्ता उभयतोभाषाः ॥ १४८९ शॄ हिंसायाम् । १४९० पॄ पालनपूरणयोः । १४९१ वॄ वरणे ॥ भरण इत्येके ॥ १४९२ भॄ भर्त्सने । १४९३ मॄ हिंसायाम् । १४९४ दॄ विदारणे । १४९५ जॄ वयोहानौ ॥ झॄ इत्येके । धॄ इत्यन्ये । १४९६ नॄ नये । १४९७ कॄ हिंसायाम् । १४९८ ॠ गतौ । १४९९ गॄ शब्दे ॥ शृणातिप्रभृतय उदात्ता उदात्तेतः परस्मैपदिनः ॥ १५०० ज्या वयोहानौ । १५०१ री गतिरेषणयोः । १५०२ ली श्लेषणे । १५०३ व्ली वरणे । १५०४ प्ली गतौ ॥ वृत् ॥ १५०५ व्री वरणे । १५०६ भ्री भये ॥ भर इत्येके ॥ १५०७ क्षीष् हिंसायाम् । १५०८ ज्ञा अवबोधने । १५०९ बन्ध बन्धने ॥ ज्यादयोऽनुदात्ता उदात्तेतःपरस्मैभाषाः॥ १५१० वृङ् संभक्तौ॥ उदात्त आत्मनेपदी ॥ १५११ श्रन्थ विमोचनप्रतिहर्षयोः । १५१२ मन्थ विलोडने । १५१३ श्रन्थ १५१४ ग्रन्थ संदर्भे । १५१५ कुन्थ संश्लेषणे ॥ संक्लेश इत्येके ॥ कुथ इति दुर्गः ॥ १५१६ मृद क्षोदे । १५१७ मृड च ॥ अयं सुखेऽपि ॥ १५१८ गुध रोषे । १५१९ कुष निष्कर्षे । १५२० क्षुभ संचलने । १५२१ णभ १५२२ तुभ हिंसायाम् । १५२३ क्लिशू विबाधने । १५२४ अश भोजने । १५२५ उध्रस उञ्छे । १५२६ इष आभीक्ष्ण्ये । १५२७ विष विप्रयोगे । १५२८ प्रुष १५२९ प्लुष स्नेहनसेवनपूरणेषु । १५३० पुष पुष्टौ । १५३१ मुष स्तेये । १५३२ खच भूतप्रादुर्भावे ॥ वान्तोऽयमित्येके ॥ १५३३ हेठ च ॥ श्रन्थादय उदात्ता उदात्तेतो विषिवर्जं परस्मैभाषाः॥ १५३४ ग्रह उपादाने ॥ उदात्तः स्वरितेदुभयतोभाषः ॥ इति श्नाविकरणाः क्रयादयः ॥ ९ ॥

१५३५ चुर स्तेये । १५३६ चिति स्मृत्याम् । १५३७ यत्रि संकोचे । १५३८ स्फुडि परिहासे ॥ स्फुटि इत्यपि ॥ १५३९ लक्ष दर्शनाङ्कनयोः । १५४० कुद्रि अनृतभाषणे । १५४१ लड उपसेवायाम् । १५४२ मिदि स्नेहने । १५४३ ओलडि उत्क्षेपणे ॥ ओकारो धात्ववयव इत्येके । न इत्यपरे । उलडि इत्यन्ये ॥ १५४४ जल

अपवारणे ॥ लज इत्येके ॥ १५४५ पीड अवगाहने । १५४६ नट अवस्यन्दने । १५४७ श्रथ प्रयत्ने ॥ प्रस्थान इत्येके ॥ १५४८ बध संयमने ॥ बन्ध इति चान्द्राः॥ १५४९ पॄ पूरणे । १५५० ऊर्ज बलप्राणनयोः । १५५१ पक्ष परिग्रहे । १५५२ वर्ण १५५३ चूर्ण प्रेरणे ॥ वर्ण वर्णन इत्येके। १५५४ प्रथ प्रख्याने। १५५५ पृथ प्रक्षेपे। पथ इत्येके ॥ १५५६ षम्ब संबन्धने । १५५७ शम्ब च ॥ साम्ब इत्येके॥ १५५८ भक्ष अदने । १५५९ कुट्ट छेदनभर्त्सनयोः ॥ पूरण इत्येके ॥ १५६० पुट्ट १५६१ चुट्ट अल्पीभावे । १५६२ अट्ट १५६३ षुट्ट अनादरे । १५६४ लुण्ठ स्तेये । १५६५ शठ १५६६ श्वठ असंस्कारगत्योः ॥ श्वठि इत्येके ॥ १५६७ तुजि १५६८ पिजि हिंसाबलादाननिकेतनेषु ॥ तुज पिज इति केचित् । लजि लुजि इत्येके॥ १५६९ पिस गतौ । १५७० षान्त्व सामप्रयोगे॥ १५७१ श्वल्क १५७२ वल्क परिभाषणे । १६७३ ष्णिह स्नेहने ॥ स्फिट इत्येके ॥ १५७४ स्मिट अनादरे । ष्मिङ् इत्येके ॥ १५७५ श्लिष श्लेषणे । १५७६ पथि गतौ । १५७७ पिछ कुटने । १५७८ छदि संवरणे । १५७९ श्रण दाने। १५८० तड आघाते। १५८१ खड १५८२ खडि १५८३ कडि भेदने । १५८४ कुडि रक्षणे । १५८५ गुडि वेष्टने । रक्षण इत्येके । कुठि इत्यन्ये । गुठि इत्यपरे । १५८६ खुडि खण्डने । १५८७ वटि विभाजने ॥ वडि इति केचित् । १५८८ मडि भूषायां हर्षे च । १५८९ भडि कल्याणे । १५९० छर्द वमने । १५९१ पुस्त १५९२ बुस्त आदरानादरयोः । १५९३ चुद संचोदने । १५९४ नक्क १५९५ धक्क नाशने। १५९६ चक्क १५९७ चुक्क व्यथने । १५९८ क्षल शौचकर्मणि । १५९९ तल प्रतिष्ठायाम् । १६०० तुल उन्माने । १६०१ दुल उत्क्षेपे । १६०२ पुल महत्त्वे । १६०३ चुल समुच्छ्राये । १६०४ मूल रोहणे । १६०५ कल १६०६ विल क्षेपे । १६०७ बिल भेदने । १६०८ तिल स्नेहने । १६०९ चल भृतौ । १६१० पाल रक्षणे। १६११ लूष हिंसायाम् । १६१२ शुल्ब माने । १६१३ शूर्प च । १६१४ चुट छेदने । १६१५ मुट संचूर्णने । १६१६ पडि १६१७ पसि नाशने । १६१८ वज मार्गसंस्कारगत्योः । १६१९ शुल्क अतिस्पर्शने । १६२० चपि गत्याम् । १६२१ क्षपि क्षान्त्याम् । १६२२ छजि कृच्छ्रजीवने । १६२३ श्वर्त गत्याम् । १६२४ श्वभ्र च। १६२५ ज्ञप ज्ञानज्ञापनमारणतोषणनिशाननिशामनेषु ॥ मिच्चेत्येके ॥ १६२६ यम च परिवेषणे । १६२७ चह परिकल्कने ॥ चप इत्येके ॥ १६२८ रह त्यागे च । १६२९ बल प्राणने । १६३० चिञ् चयने ॥ नान्ये मितोऽहेतौ ॥ १६३१ घट्ट चलने । १६३२ मुस्त संघाते । १६३३ खट्ट संवरणे । १६३४ षट्ट १६३५ स्फिट्ट १६३६ चुबि हिंसायाम् । १६३७ पुल

संघाते ॥ पूर्ण इत्येके । पुण इत्यन्ये ॥ १६३८ पुंस अभिवर्धने । १६३९ टकि बन्धने । १६४० धूस कान्तिकरणे ॥ मूर्धन्यान्त इत्येके । तालव्यान्त इत्यन्ये ॥ १६४१ कीट वर्णे । १६४२ चूर्ण संकोचने । १६४३ पूज पूजायाम् । १६४४ अर्क स्तवने ॥ तपन इत्येके ॥ १६४५ शुठ आलस्ये । १६४६ शुठि शोषणे । १६४७ जुड प्रेरणे । १६४८ गज १६४९ मार्ज शब्दार्थौ । १६५० मर्च च । १६५१ घृ प्रस्रवणे ॥ स्रावण इत्येके ॥ १६५२ पचि विस्तारवचने । १६५३ तिज निशाने । १६५४ कृत संशब्दने । १६५५ वर्ध छेदनपूरणयोः । १६५६ कुबि आच्छादने ॥ कुभि इत्येके ॥ १६५७ लुबि १६५८ तुबि अदर्शने ॥ अर्दन इत्येके ॥ १६५९ ह्लप व्यक्तायां वाचि ॥ क्लप इत्येके ॥ १६६० चुटि छेदने । १६६१ इल प्रेरणे । १६६२ म्रक्ष म्लेच्छने । १६६३ म्लेच्छ अव्यक्तायां वाचि ॥ १६६४ ब्रूस १६६५ बर्ह हिंसायाम् ॥ केचिदिह गर्ज गर्द शब्दे गर्ध अभिकाङ्क्षायाम् इति पठन्ति ॥ १६६६ गुर्द पूर्वनिकेतने । १६६७ जसि रक्षणे ॥ मोक्षण इति केचित् ॥ १६६८ ईड स्तुतौ । १६६९ जसु हिंसायाम् । १६७० पिडि संघाते । १६७१ रुष रोषे ॥ रुट इत्येके ॥ १६७२ डिप क्षेपे । १६७३ ष्टुप समुच्छ्राये ॥ आकुस्मादात्मनेपदिनः ॥ १६७४ चित संचेतने । १६७५ दशि दंशने । १६७६ दसि दर्शनदंशनयोः ॥ दस इत्यप्येके ॥ १६७७ डप १६७८ डिप संघाते । १६७९ तत्रि कुटुम्बधारणे । १६८० मत्रि गुप्तपरिभाषणे । १६८१ स्पश ग्रहणसंश्लेषणयोः । १६८२ तर्ज १६८३ भर्त्स तर्जने । १६८४ वस्त १६८५ गन्ध अर्दने । १६८६ विष्क हिंसायाम् ॥ हिष्क इत्येके ॥ १६८७ निष्क परिमाणे । १६८८ लल ईप्सायाम् । १६८९ कूण संकोचे । १६९० तूण पूरणे । १६९१ भ्रूण आशाविशङ्कयोः । १६९२ शठ श्लाघायाम् । १६९३ यक्ष पूजायाम् । १६९४ स्यम वितर्के । १६९५ गूर उद्यमने । १६९६ शम १६९७ लक्ष आलोचने । १६९८ कुत्स अवक्षेपणे । १६९९ त्रुट छेदने ॥ कुट इत्येके ॥ १७०० गल स्रवणे । १७०१ भल आभण्डने । १७०२ कूट आप्रदाने ॥ अवसादन इत्येके ॥ १७०३ कुट्ट प्रतापने । १७०४ वन्चु प्रलम्भने । १७०५ वृष शक्तिबन्धने । १७०६ मद तृप्तियोगे । १७०७ दिवु परिकूजने । १७०८ गृ विज्ञाने । १७०९ विद चेतनाख्याननिवासेषु । १७१० मान स्तम्भे । १७११ यु जुगुप्सायाम् । १७१२ कुस्म नाम्नो वा कुत्सितस्मयने ॥ इत्याकुस्मीयाः ॥ १७१३ चर्च अध्ययने । १७१४ बुक्क भाषणे । १७१५ शब्द उपसर्गादाविष्कारे च ॥ १७१६ कण निमीलने । १७१७ जभि नाशने । १७१८ षूद क्षरणे । १७१९ जसु ताडने । १७२० पश बन्धने । १७२१ अम रोगे । १७२२ चट १७२३ स्फुट

मेदने । १७२४ घट संघाते । हन्त्यर्थाश्च । १७२५ दिवु मर्दने । १७२६ अर्ज प्रतियत्ने । १७२७ घुषिर् विशब्दने । १७२८ आङः क्रन्द सातत्ये । १७२९ लस शिल्पयोगे । १७३० तसि १७३१ भूष अलंकरणे । १७३२ अर्ह पूजायाम् । १७३३ ज्ञा नियोगे । १७३४ भज विश्राणने । १७३५ शृधु प्रहसने । १७३६ यत निकारोपस्कारयोः । १७३७ रक १७३८ लग आस्वादने ॥ रघ इत्येके । रग इत्यन्ये ॥ १७३९ अन्चु विशेषणे । १७४० लिगि चित्रीकरणे । १७४१ मुद संसर्गे । १७४२ त्रस धारणे ॥ ग्रहण इत्येके । वारण इत्यन्ये ॥ १७४३ उध्रस उञ्छे ॥ उकारो धात्ववयव इत्येके । न इत्यन्ये । १७४४ मुच प्रमोचने । मोदने च । १७४५ वस स्नेहच्छेदापहरणेषु । १७४६ चर संशये । १७४७ च्यु सहने ॥ हसने चेत्येके । च्युस इत्येके ॥ १७४८ भुवोऽवकल्कने । १७४९ कृपेश्च ॥ आ स्वदः सकर्मकात् ॥ १७५० ग्रस ग्रहणे । १७५१ पुष धारणे । १७५२ दल विदारणे । १७५३ पट १७५४ पुट १७५५ लुट १७५६ तुजि १७५७ मिजि १७५८ पिजि १७५९ लुजि १७६० भजि १७६१ लघि १७६२ त्रसि १७६३ पिसि १७६४ कुसि १७६५ दशि १७६६ कुशि १७६७ घट १७६८ घटि १७६९ बृहि १७७० बर्ह १७७१ बल्ह १७७२ गुप १७७३ धूप १७७४ विच्छ १७७५ चीव १७७६ पुथ १७७७ लोकृ १७७८ लोचृ १७७९ णद १७८० कुप १७८१ तर्क १७८२ वृतु १७८३ वृधु भाषार्थाः । १७८४ रुट १७८५ लजि १७८६ अजि १७८७ दसि १७८८ भृशि १७८९ रुशि १७९० शीक १७९१ रुसि १७९२ नट १७९३ पुटि १७९४ जि १७९५ चि १७९६ रघि १७९७ लघि १७९८ अहि १७९९ रहि १८०० महि च । १८०१ लडि १८०२ तड १८०३ नल च । १८०४ पूरी आप्यायने । १८०५ रुज हिंसायाम् । १८०६ ष्वद आस्वादने । स्वाद इत्येके ॥ आ धृषाद्वा ॥ १८०७ युज १८०८ पृच संयमने । १८०९ अर्च पूजायाम् । १८१० षह १८११ ईर क्षेपे । १८१२ ली द्रवीकरणे । १८१३ वृजी वर्जने । १८१४ वृञ् आवरणे मर्षणे । १८१५ जॄ वयोहानौ । १८१६ ज्रि च । १८१७ रिच वियोजनसंपर्चनयोः । १८१८ शिष असर्वोपयोगे । १८१९ तप दाहे । १८२० तृप तृप्तौ ॥ संदीपन इत्येके ॥ १८२१ छृदी संदीपने ॥ चृप छृप दृप संदीपन इत्येके ॥ १८२२ दृभी भये । १८२३ दृभ संदर्भे । १८२४ श्रथ मोक्षणे ॥ हिंसायाम् इत्यन्ये ॥ १८२५ मी गतौ । १८२६ ग्रन्थ बन्धने । १८२७ शीक आमर्षणे । १८२८ चीक च । १८२९ अर्द हिंसायाम् ॥ स्वरितेत् ॥ १८३० हिंसि हिंसायाम् । १८३१ अर्ह पूजायाम् । १८३२ आङः–षद पद्यर्थे । १८३३ शुन्ध शौच-

कर्मणि । १८३४ छद अपवारणे ॥ स्वरितेत् ॥ १८३५ जुष परितर्कणे ॥ परितर्पण इत्यन्ये ॥ १८३६ धूञ् कम्पने । १८३७ प्रीञ् तर्पणे । १८३८ श्रन्थ १८३९ ग्रन्थ संदर्भे । १८४० आप्लृ लम्भने ॥ स्वरितेदयमित्येके ॥ १८४१ तनु श्रद्धोपकरणयोः॥ उपसर्गाच्च दैर्ध्ये ॥ चन श्रद्धोपहननयोरित्येके ॥ १८४२ वद संदेशवचने ॥ स्वरितेत् । अनुदात्तेदित्येके ॥ १८४३ वच परिभाषणे । १८४४ मान पूजायाम् । १८४५ भू प्राप्तावात्मनेपदी ॥ १८४६ गर्ह विनिन्दने । १८४७ मार्ग अन्वेषणे । १८४८ कठि शोके । १८४९ मृजू शौचालंकारयोः । १८५० मृष तितिक्षायाम् ॥ स्वरितेत् ॥ १८५१ धृष प्रसहने ॥ इत्याधृषीयाः ॥ अथादन्ताः ॥ १८५२ कथ वाक्यप्रबन्धे । १८५३ वर ईप्सायाम् । १८५४ गण संख्याने । १८५५ शठ १८५६ श्वठ सम्यगवभाषणे । १८५७ पट १८५८ वट ग्रन्थे । १८५९ रह त्यागे । १८६० स्तन १८६१ गदी देवशब्दे । १८६२ पत गतौ वा ॥ वा अदन्त इत्येके ॥ १८६३ पष अनुपसर्गात् । १८६४ स्वर आक्षेपे । १८६५ रच प्रतियत्ने । १८६६ कल गतौ संख्याने च । १८६७ चह परिकल्कने । १८६८ मह पूजायाम् । १८६९ सार १८७० कृप १८७१ श्रथ दौर्बल्ये । १८७२ स्पृह ईप्सायाम् । १८७३ भाम क्रोधे । १८७४ सूच पैशुन्ये । १८७५ खेट भक्षणे ॥ तृतीयान्त इत्येके । खोट इत्यन्ये । १८७६ क्षोट क्षेपे । १८७७ गोम उपलेपने । १८७८ कुमार क्रीडायाम् । १८७९ शील उपधारणे । १८८० साम सान्त्वप्रयोगे । १८८१ वेल कालोपदेशे । काल इति पृथग्धातुरित्येके ॥ १८८२ पल्यूल लवनपवनयोः । १८८३ वात सुखसेवनयोः ॥ गति सुखसेवनयोरित्येके ॥ १८८४ गवेष मार्गणे । १८८५ वास उपसेवायाम् । १८८६ निवास आच्छादने । १८८७ भाज पृथक्कर्मणि । १८८८ सभाज प्रीतिदर्शनयोः॥ प्रीतिसेवनयोरित्येके ॥ १८८९ ऊन परिहाणे । १८९० ध्वन शब्दे । १८९१ कूट परितापे ॥ परिदाह इत्यन्ये ॥ १८९२ सङ्केत १८९३ ग्राम १८९४ कुण १८९५ गुण चामन्त्रणे । १८९६ केत श्रावणे निमन्त्रणे च । १८९७ कुण संकोचनेऽपि । १८९८ स्तेन चौर्ये । आगर्वादात्मनेपदिनः ॥ १८९९ पद गतौ । १९०० गृह ग्रहणे । १९०१ मृग अन्वेषणे । १९०२ कुह विस्मापने । १९०३ शूर १९०४ वीर विक्रान्तौ । १९०५ स्थूल परिबृंहणे । १९०६ अर्थ उपयाच्ञायाम् । १९०७ सत्र संतानक्रियायाम् । १९०८ गर्व माने ॥ इत्यागर्वीयाः ॥ १९०९ सूत्र वेष्टने । १९१० मूत्र प्रस्रवणे । १९११ रूक्ष पारुष्ये। १९१२ पार १९१३ तीर कर्मसमाप्तौ । १९१४ पुट संसर्गे । १९१५ धेक दर्शन इत्येके । १९१६ कत्र शैथिल्ये ॥ कर्त इत्यन्येके ॥ 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' ।

'तत्करोति तदाचष्टे' । 'तेनातिक्रामति' । 'धातुरूपं च'। 'आख्यानात्कृतस्तदाचष्टेकृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' (वार्तिक ३·१·२६·६) 'कर्तृकरणाद्धात्वर्थे। १९१७ वल्क दर्शने । १९१८ चित्र चित्रीकरणे ॥ कदाचिद्दर्शने ॥ १९१९ अंस समाघाते । १९२० वट विभाजने । १९२१ लज प्रकाशने ॥ वटि लजि इत्येके १९२२ मिश्र संपर्के । १९२३ सङ्ग्राम युद्धे ॥ अनुदात्तेत् ॥ १९२४ स्तोम श्लाघायाम् । १९२५ छिद्र कर्णभेदने ॥ करणभेदन इत्येके । कर्ण इति धात्वन्तरमित्यपरे ॥ १९२६ अन्ध दृष्ट्युपघाते ॥ उपसंहार इत्यन्ये ॥ १९२७ दण्ड दण्डनिपातने । १९२८ अङ्क पदे लक्षणे च । १९२९ अङ्ग च । १९३० सुख १९३१ दुःख तत्क्रियायाम् । १९३२ रस आस्वादनस्नेहनयोः। १९३३ व्यय वित्तसमुत्सर्गे। १९३४ रूप रूपक्रियायाम् । १९३५ छेद द्वैधीकरणे । १९३६ छद अपवारणे । १९३७ लाभ प्रेरणे । १९३८ व्रण गात्रविचूर्णने । १९३९ वर्ण वर्णक्रियाविस्तारगुणवचनेषु ॥ बहुलमेतन्निदर्शनम् ॥ १९४० पर्ण हारितभावे । १९४१ विष्क दर्शने । १९४२ क्षप प्रेरणे १९४३ वस निवासे । १९४४ तुत्थ आवरणे ॥ णिङङ्गान्निरसने । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । पुच्छादिषु प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धम् ॥ इति स्वार्थणिजन्ताश्चुरादयः ॥ १० ॥

इति श्रीपाणिनिमुनिप्रणीतो धातुपाठः समाप्तः ।

---

# गणपाठः ॥

## १. अंश्वादयः ६, २, १९३.

१ अंशु, २ जन, ३ राजन्, ४ उष्ट्र, ५ खेटक (रोटक का.), ६ अजिर, ७ आर्द्रा, ८ श्रवण, ९ कृत्तिका, १० अर्ध, ११ पुर (आर्धपुर, °पुरः) इत्यंश्वादिः ।

## २. अक्षद्यूतादयः ४, ४, १९.

१ अक्षद्यूत, २ जानुप्रहृत (°प्रहूत का.), ३ जङ्घाप्रहृत (प्रहूत का.), ४ जङ्घाप्रहृत*, ५ पादस्वेदन, ६ कण्टकमर्दन, ७ गतानुगत*, ८ गतागत, ९ यातोपयात, १० अनुगत । इत्यक्षद्यूतादिः ।

## ३. अङ्गुल्यादयः ५, ३, १०८.

१ अङ्गुलि (अङ्गुली), २ भरुज, ३ बभ्रु, ४ वल्गु, ५ मण्डर, ६ मण्डल, ७ शष्कुली (शष्कुल का.), ८ हरि*, ९ कपि, १०

मुनि*, ११ रुह*, १२ खल*, १३ उदश्वित्, १४ गोणि, १५ उरस्, १६ कुलिश, १७ शिखा। इत्यङ्गुल्यादिः।

## ४ अजादयः ४, १, ४.

१ अजा, २ एडका, ३ कोकिला (जातिः का.),४ चटका, ५ अश्वा, ६ मूषिका (मूषिकेति जातिः का.), ७ बाला, ८ होडा (होढा का.), ९ पाका, १० वत्सा, ११ मन्दा, १२ विलाता, ( विलातेति वयः का. ), १३ पूर्वापहाणा ( पूर्वापहरणा का. ), १४ अपरापहाणा ( अपरापहारणा का. ), १५ संभस्त्राजिनशणपिण्डेभ्यः फलात् (संफला, त्रिफला द्विगौ । बहुव्रीहौ त्रिफली संहातिः का. ), १६ सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् (सत्प्राक्काण्ड° का.), १७शूद्रा चामहत्पूर्वा जातिः, १८ क्रुञ्चा, १९ उष्णिहा, २० देवविशा ( हलन्ताः क्रुञ्च्, उष्णिह् देवविश् ), २१ ज्येष्ठा, २२ कनिष्ठा, २३ मध्यमा पुंयोगेऽपि ( मध्यमा। पुंयोगः ) २४ मूलान्नञः ( अमूला ), २५ दंष्ट्रा इत्यजादिः ।

## ५ आजिरादयः ६, ३, ११८.

१ अजिर, २ खदिर, ३ पुलिन, ४ हंस ( हंसक त. वि. ), ५ कारण्डव ( कारण्ड त. वि. हंसकारण्डव का. ), ६ चक्रवाक इत्यजिरादिः ।

## ६ आदिप्रभृतयः २, ४, ७२.

धातुपाठे ( १०११–१०८२ ) द्रष्टव्याः

## ७ अनुप्रवचनादयः ५, १, १११.

१ अनुप्रवचन, २ उत्थापन, ३ उपस्थापन, ४ संवेशन, ५ प्रवेशन, ६ अनुप्रवेशन, ७ अनुवासन, ८ अनुवचन, ९ अनुवाचन, १० अन्वारोहण, ११ प्रारम्भण, १२ आरम्भण, १३ आरोहण, १४ अनुवेशन, १५ अनुवादन, १६ प्ररोहण। इत्यनुप्रवचनादिः।

## ८ अनुशतिकादयः ७, ३, २०.

१ अनुशतिक, २ अनुहोड, ३ अनुसंवरण ( अनुसंचरण ), ४ अनुसंवत्सर, ५ अङ्गारवेणु, ६ असिहत्य ( अस्यहत्य ), ७ अस्यहेति, ८ वध्योग, ९ पुष्करसद्, १० अनुहरत्, ११ कुरुकत, १२ कुरुपञ्चाल, १३ उदकशुद्ध, १४ इहलोक, १५ परलोक, १६ सर्वलोक, १७ सर्वपुरुष, १८ सर्वभूमि, १९ प्रयोग, २० परस्त्री, २१ राजपुरुषात् ष्यञि, २२ सूत्रनड, । आकृतिगणः, तेन । २३ अभिगम, २४ आधिभूत, २५ अधिदेव, २६ चतुर्विद्या, २७ सुखशयन ( का. ), २८ शतकुम्भ (का.), २९ परदर (का.) इत्यनुशतिकादिः ।

## ९ अपूपादयः ५, १, ४.

१ अपूप, २ तण्डल, ३ अभ्यूष, (अभ्युष), ४ अभ्योष, ५ अवोष, ६ अभ्येष, ७ पृथुक, ८ ओदन, ९ सूप, १० पूप, ११ किण्व, १२ प्रदीप, १३ मुसल, १४ कटक, १५ कर्णवेष्टक, १६ इर्गल*, १७ अर्गल, १८ अन्नविकारेभ्यश्च, १९ यूप*, २० स्थूणा, २१ दीप, ( पीप का. ), २२ अश्व, २३ पत्र, २४ कट, २५ अयःस्थूण । इत्यपूपादिः ।

## १० अयस्मयादीनि १, ४, २०.

( अत्र शब्दा न पठिताः )

## ११ अरीहणादयः ४, २, ८०.

१ अरीहण (अहीरण) २ द्रुघण, ३ द्रुहण*, ४ भगल ( भलग ), ५ उलन्द, ६ किरण, ७ सांपरायण, ८ क्रौष्ट्रायण (क्रौष्ठायन), ९ औष्ट्रायण*, १० त्रैगर्तायन, ११ मैत्रायण, १२ भास्त्रयण, १३ वैमतायन (वैमत्तायन ), १४ गौमतायन ( गो° का. ), १५ सौमतायन, १६ सौसायन, १७ धौमता-

यन*, १८ सौमायन*, १९ ऐन्द्रायण*, २० कौन्द्रायण* ( कौद्रायण ), २१ खाडायन, २२ शाण्डिल्यायान, २३ रायस्पोष, २४ विपथ, २५ विपाश, २६ उद्दण्ड, २७ उदश्चन, २८ खाण्डवीरण ( खाण्ड का. ), २९ वीरण, ३० काशकृत्स्न ( कश° ), ३१ जाम्बवत ( °वन्त का. ), ३२ शिंशपा, ३३ रैवत (रेवत), ३४ बिल्व (बैल्व का.), ३५ सुयज्ञ, ३६ शिरीष, ३७ बाधिर, ३८ जम्बु, ३९ खदिर, ४० सुशर्मन् (सशर्मन् सुशर्म का.), ४१ दलतृ*, ४२ भलन्दन*, ४३ खण्डु*, ४४ कनल* (कलन), ४५ यज्ञदत्त*, ४६ सार ( का. ), ४७ वैगर्तायण ( का. ), ४८ खाण्डायन ( का. ) इत्यरीहणादिः ।

## १२ अर्धर्चाः २, ४, ३१.

१ अर्धर्च, २ गोमय, ३ कषाय, ४ कार्षापण, ५ कुतप, ६ कुणप, ७ कपाट, ८ शङ्ख, ९ गूथ, १० यूथ, ११ ध्वज, १२ कबन्ध, १३ पद्म, १४ गृह, १५ सरक, १६ कंस, १७ दिवस, १८ यूष, १९ अन्धकार, २० दण्ड, २१ कमण्डलु, २२ मण्ड, २३ भूत, २४ द्वीप, २५ द्यूत, २६ चक्र, २७ धर्म, २८ कर्मन्, २९ मोदक, ३० शतमान, ३१ यान, ३२ नख, ३३ नखर, ३४ चरण, ३५ पुच्छ, ३६ दाडिम, ३७ हिम, ३८ रजत, ३९ सक्तु, ४० पिधान, ४१ सार, ४२ पात्र, ४३ घृत, ४४ सैन्धव, ४५ औषध, ४६ आढक, ४७ चषक, ४८ द्रोण, ४९ खलीन, ५० पात्रीव, ५१ षष्टिक, ५२ वारवाण (वार, बाण का. ), ५३ प्रोथ, ५४ कपित्थ, ५५ शुष्क, ५६ शाल*, ५७ शील, ५८ शुल्क (शुल्ब, शुक्र का.), ५९ सीधु ( शीधु ), ६० कवच, ६१ रेणु, ६२ ऋण, ६३ कपट, ६४ शीकर (सी° का.), ६५ मुसल, ६६ सुवर्ण, ६७ वर्ण, ६८ पूर्व (यूप का.), ६९ चमस, ७० क्षीर, ७१ कर्ष, ७२ आकाश, ७३ अष्टापद, ७४ मङ्गल, ७५ निधन, ७६ निर्यास, ७७ जृम्भ, ७८ वृत्त, ७९ पुस्त, ८० बुस्त, ८१ क्ष्वेडित, ८२ शृङ्ग, ८३ निगड, ८४ खल, ८५ मधु, ८६ मूल, ८७ मूलक, ८८ स्थूल, ८९ शराव, ९० नाल (शाल का.), ९१ वप्र, ९२ विमान, ९३ मुख, ९४ प्रग्रीव, ९५ शूल, ९६ वज्र, ९७ कटक, ९८ कण्टक, ९९ कर्पट, १०० शिखर, १०१ कल्क (वल्कल), १०२ नाट, १०३ मस्तक (नटमक), १०४ वलय, १०५ कुसुम, १०६ तृण, १०७ पङ्क, १०८ कुण्डल, १०९ किरीट, ११० कुमुद, १११ अर्बुद, ११२ अङ्कुश, ११३ तिमिर, ११४ आश्रम, ११५ भूषण, ११६ इष्वास (इल्कस, इक्कस का.), ११७ मुकुल, ११८ वसन्त, ११९ तडाग ( तटाक ), १२० पिटक, १२१ विटङ्क, १२२ विडङ्ग, १२३ पिण्याक, १२४ माष, १२५ कोश, १२६ फलक, १२७ दिन, १२८ दैवत, १२९ पिनाक, १३० समर, १३१ स्थाणु, १३२ अनीक, १३३ उपवास, १३४ शाक, १३५ कर्पास, १३६ विशाल, १३७ चषाल (चखाल), १३८ खण्ड, १३९ दर, १४० विटप, १४१ रण, १४२ बल, १४३ मक (मल का.), १४४ मृणाल, १४५ हस्त, १४६ आर्द्र, १४७ हल, १४८ सूत्र, १४९ ताण्डव, १५० गाण्डीव, १५१ मण्डप, १५२ पटह, १५३ सौध, १५४ योध, १५५ पार्श्व, १५६ शरीर, १५७ फल, १५८ छल, १५९ पुर, १६० राष्ट्र, १६१ बिम्ब, १६२ अम्बर, १६३ कुट्टिम, १६४ कुक्कुट, १६५ कुडप, १६६ ककुद, १६७ खण्डल, १६८ तोमर, १६९ तोरण, १७० मञ्चक, १७१ पञ्चक, १७२ पुङ्ख, १७३ मध्य, १७४ बाल, १७५ छाल, १७६ वल्मीक (वाल्मीक का.), १७७ वर्ष, १७८ वस्त्र, १७९ वसु, १८० देह, १८१ उद्यान, १८२ उद्योग, १८३ स्नेह, १८४ स्तेन, १८५ स्तन, १८६ स्वर, १८७ संगम, १८८ निष्क, १८९ क्षेम, १९० शूक, १९१ क्षत्र, १९२

पवित्र, १९३ यौवन, १९४ कलह, १९५ पालक ( मालक ), १९६ मूषिक, १९७ मण्डल, १९८ वल्कल, १९९ कुञ्ज, २०० विहार, २०१ लोहित, २०२ विषाण, २०३ भवन, २०४ अरण्य, २०५ पुलिन, २०६ दृढ, २०७ आसन, २०८ ऐरावत, २०९ शूर्प, २१० तीर्थ, २११ लोमश, २१२ तमाल, २१३ लोह, २१४ दण्डक, २१५ शपथ, २१६ प्रतिसर, २१७ दारु, २१८ धनुस्, २१९ मान, २२० वर्चस्क, २२१ कूर्च, २२२ तण्डक, २२३ मठ (मव का.), २२४ सहस्र, २२५ ओदन, २२६ प्रवाल, २२७ शकट, २२८ अपराह्ण, २२९ नीड, २३० शकल, २३१ तण्डुल, २३२ तङ्क, २३३ वितङ्क, २३४ विश्व, २३५ छत्र, २३६ पानक, २३७ शृङ्खल, २३८ मुण्ड, २३९ पूत, २४० मरु, २४१ लोमन, २४२ लिङ्ग, २४३ सीर, २४४ क्षत, २४५ कडार, २४६ पूर्ण, २४७ पणव, २४८ पुस्तक, २४९ पल्लव, २५० शार, २५१ नाल, २५२ प्रवर, २५३ पुराण, २५४ जाल, २५५ स्कन्ध, २५६ ललाट, २५७ कुङ्कुम, २५८ कुशल, २५९ कटक, २६० उद्याम. इति अर्धर्चादिः ।

## १३ अर्शआदयः ५, २, १२७.

१ अर्शस्, २ उरस् , ३ तुन्द, ४ चतुर, ५ पलित, ६ जटा, ७ घटा, ८ घाटा*, ९ अघ (अभ्र का.), १० कर्दम, ११ अम्ल (आम का.), १२ लवण, १३ स्वाङ्गाद्धीनात्, १४ वर्णात् आकृतिगणः इत्यर्शआदिः ।

## १४ अश्मादयः ४, २, ८०.

१ अश्मन् , २ यूथ ( यूष का. ), ३ ऊष (रूष, रुष का.), ४ मीन, ५ नद, ६ दर्भ, ७ वृन्द, ८ गुद*, ९ खण्ड, १० नग, ११ शिखा, १२ कोट (काट का.), १३ पाम (पांम का.), १४ कन्द*, १५ कान्द*, १६ कुल*, १७ गह्व*, १८ गुड*, १९ कुण्डल*, २० पान*, २१ गुह* । इत्यश्मादिः ।

## १५ अश्वादयः (१) ४, १, ११०.

१ अश्व, २ अश्मन्, ३ शङ्ख, ४ शूद्रक, ५ विद, ६ पुट ( विदापुट का.), ७ रोहिणी ८ खजूर (खजूर), ९ खञ्जार (खञ्जूल का. ), १० बस्त*, ११ पिञ्जूल (पिञ्जूर का.), १२ भडिल, १३ भाण्डिल, १४ भडित, १५ भाण्डित १६ प्रकृत*, १७ रामोद, १८ क्षान्त ( क्षत्र का. ), १९ काश, २० तीक्ष्ण*, २१ गोलाङ्क, २२ अर्क, २३ स्वर (स्वन का.), २४ स्फुट*, २५ चक्र, २६ अविष्ठ (श्रविष्ठा का ), २७ पविन्द ( पविन्दा का.), २८ पवित्र, २९ गोमिन्, ३० श्याम, ३१ धूम, ३२ धूम्र, ३३ वाग्मिन्, ३४ विश्वानर, ३५ कुट, ३६ शप आत्रेये (वेश, आत्रेय का. ), ३७ जन, ३८ जड, ३९ खड, ४० ग्रीष्म, ४१ अर्ह, ४२ कित, ४३ विशंप, ४४ विशाल (विशाला, का.) ४५ गिरि, ४६ चपल, ४७ चुप (चुम्प का. ), ४८ दासक, ४९ बैल्व (वैल्य का. ), ५० प्राच्य, ५१ धर्म्य (मन), ५२ आनडुह्य, ५३ पुंसि जाते, ५४ अर्जुन, ५५ प्रहृत, ५६ सुमनस, ५७ दुर्मनस, ५८ मनस*, ५९ प्रान्त ( क्षान्त का. ), ६० ध्वन, ६१ आत्रेय भरद्वाजे (भार॰ का.), ६२ भरद्वाज, ६३ उत्स (कुत्स का. ), ६४ आतव, ६५ कितव, ६६ वद*, ६७ धन्य*, ६८ पाद, ६९ शिव, ७० खदिर ७१ मण्डिक, ७२ ग्रीवा, ७३ कुल, ७४ काण, ७५ नड, ७६ वीक्ष्य, ७७ वह, ७८ खेड, ७९ नस्त, ८० ओजस, ८१ नम इत्यश्वादिः।

## १६ अश्वादिः (२) ५, १, ३९.

१ अश्व, २ अश्मन्, ३ गण, ४ ऊर्णा (उर्म), ५ उमा, ६ गङ्गा ( भङ्ग, भङ्गा ), ७ वर्षा (वर्ष का.), ८ वसु । इत्यश्वादिः।

## १७ अश्वपत्यादयः ४, १, ८४.

१ अश्वपति, २ ज्ञानपति*, ३ शतपति, ४ धनपति ५ गणपति, ६ स्थानपति*, ७ यज्ञपति*, ८ राष्ट्रपति, ९ कुलपति, १० गृहपति, ११ धान्यपति, १२ धन्वपति*, १३ बन्धुपति*, १४ धर्मपति, १५ सभापति, १६ प्राणपति, १७ क्षेत्रपति । इत्यश्वपत्यादिः ।

## १८ आकर्षादयः

## (आकषादयः) ५, २, ६४.

१ आकर्ष (आकष), २ त्सरु, ३ पिशाच (पिपासा का. ), ४ पिचण्ड, ५ अशनि, ६ अश्मन्, ७ निचय (विचय का.), ८ चय, ९ विजय*, १० जय, ११ आचय, १२ नय, १३ पाद (निपाद का.), १४ दीप, १५ ह्रद, १६ ह्राद, १७ ह्लाद, १८ गद्गद, १९ शकुनि, २० अय । इत्याकर्षादिः ।

## १९ आचितादयः ६, २, १४६.

१ आचित, २ पर्याचित, ३ आस्थापित, ४ परिगृहीत, ५ निरुक्त (निरक्त), ६ प्रतिपन्न, ७ अपश्लिष्ट*, ८ प्रश्लिष्ट, ९ उपहित (उपहत), १० उपस्थित, ११ संहितागवि ( संहिताशब्दो यदा गोरन्यस्य संज्ञा तदान्तोदात्तो न भवति । यदा तु गोः संज्ञा तदान्तोदात्त एव॥ ). इत्याचितादिः ।

## २० आहिताग्न्यादयः २, २, ३७.

१ आहिताग्नि, २ जातपुत्र, ३ जातदन्त, ४ जातश्मश्रु, ५ तैलपीत, ६ घृतपीत, ७ मद्यपीत*, ८ ऊढभार्य, ९ गतार्थ । आकृतिगणोयम् । तेन गडगण्ड, अस्युद्यत (अस्मुद्यत, दण्डपाणिप्रभृतयोऽपि । त. वि.) इत्याहिताग्निः ।

## २१ इन्द्रजननादयः ४, ३, ८८.

(आकृतिगणोऽयं प्रयोगतोऽनुसर्तव्यः। का.)

## २२ इष्टादयः ५, २, ८८.

१ इष्ट, २ पूर्त, ३ उपासादित ( उपसादित), ४ निगदित, ५ परिगदित*, ६ परिवादित. ७ निकथित, ८ निषादित*, ९ निपठित, १० संकलित, ११ परिकलित, १२ संरक्षित, १३ परिरक्षित, १४ अर्चित, १५ गणित*, १६ अवकीर्ण, १७ आयुक्त, १८ गृहीत*, १९ आम्नात, २० श्रुत (आम्नातश्रुत), २१ अधीत, २२ [ अवधान ]*, २३ आसेवित, २४ अवधारित, २५ अवकल्पित, २६ निराकृत, २७ उपकृत, २८ उपाकृत, २९ अनुयुक्त, ३० अनुगणित, ३१ अनुपठित, ३२ व्याकुलित, ३३ परिकथित, ३४ संकल्पित, ३५ विकालित, ३६ निपातित, ३७ पठित, ३८ पूजित, ३९ परिगणित, ४० उपगणित, ४१ परित (!), ४२ अपवारित, ४३ उपनत, ४४ निगृहीत, ४५ अपचित । इतीष्टादिः ।

## २३ उक्थादयः ४, २, ६०.

१ उक्थ, २ लोकायत, ३ न्याय, ४ न्यास, ५ पुनरुक्त, ६ निरुक्त, ७ निमित्त, ८ द्विपदा, ९ ज्योतिष ( द्विपदी, ज्योतिषि का.), १० अनुपद, ११ अनुकल्प, १२ यज्ञ, १३ धर्म, १४ चर्चा, १५ क्रमेतर, १६ श्लक्ष्ण (श्लक्ष), १७ संहिता, १८ पदक्रम (पद। क्रम का.), १९ संघट्ट (संघात, संघट का.), २० वृत्ति, २१ परिषद्*, २२ संग्रह, २३ गण, २४ गुण ( गुणागुण का. ), २५ आयुर्वेद (आयुर्देव), २६ अनुगुण इत्युक्थादिः ।

## २४ उञ्छादयः ६, १, १५६.

१ उञ्छ, २ म्लेच्छ, ३ जञ्ज, ४ जल्प

(नल्प), ५ जप, ६ वध (व्यध का.), ७ युग- कालविशेषे रथाद्युपकरणे च, ८ गरो दूष्ये, ९ वेदवेगवेष्टबन्धाः (चेष्ट, वेष्ट का.) करणे, १० स्तुयुद्रुवश्छन्दसि (परिष्टुत, संयुत, परिद्रुत), ११ वर्तनिः स्तोत्रे, १२ श्वभ्रे दरः,१३ साम्बतापौ भावगर्हायाम्, १४ उत्तमशश्वत्तमौ (°शश्वत्तमशब्दौ का.)सर्वत्र, १५ भक्षमन्थभोगमन्थाः (°भोगदेहाः का.)।

## २५ उत्करादयः ४, २, ९०.

१ उत्कर, २ संफल, ३ शफर, ४ पिप्पल, ५ पिप्पलीमूल, ६ अश्मन्, ७ सुवर्ण (सुपर्ण का. ), ८ खलाजिन, ९ तिक, १० कितव,११ अणक*, १२ त्रैवण*, १३ पिचुक, १४ अश्वत्थ, १५ काश, १६ क्षुद्र (शाकाक्षुद्र, काश, क्षुद्र का.), १७ भस्त्रा, १८ शाल, १९ जन्या, २० अजिर (अजिन का.), २१चर्मन्, २२ उत्क्रोश, २३ क्षान्त (शान्त का.), २४ खदिर, २५ शूर्पणाय, २६ श्यावनाय, २७ नैवाकव ( नैव, बक का. ), २८ तृण*, २९ वृक्ष, ३० शाक*, ३१ पलाश, ३२ विजिगीषा,* ३३ अनेक, ३४ आतप, ३५ फल*, ३६ संपर*, ३७ अर्क, ३८ गर्त, ३९ अग्नि, ४० वैराणक*, ४१ इडा, ४२ अरण्य*, ४३ निशान्त*, ४४ पर्ण, ४५ नीचायक*, ४६ शंकर*, ४७ अवरोहित, ४८ क्षार, ४९ विशाल, ५० वेत्र*, ५१ अरीहण*, ५२ खण्ड*, ५३ वातागर*, ५४ मन्त्रणार्ह*, ५५ इन्द्रवृक्ष, ५६ नितान्तवृक्ष ( नितान्तावृक्ष, नितान्त, वृक्ष का.), ५७आर्द्रवृक्ष, ५८ तृणव, ५९ अन्य, ६० मज्ज, ६१ अर्जुनवृक्ष। इत्युत्करादिः।

## २६ उत्सादयः ४, १, ८६.

१ उत्स, २ उदपान, ३ विकर, ४ विनद ( विनोद का. ), ५ महानद, ६ महानस, ७ महाप्राण, ८ तरुण, ९ तलुन, १० बष्कय असे (असमासे), ११ पृथिवी, १२ धेनु, १३ पङ्क्ति, १४ जगती, १५ त्रिष्टुभ्, १६अनुष्टुभ्, १७ जनपद, १८ भरत, १९ उशीनर, २० ग्रीष्म, २१ पीलुकुण (पीलु । कुल का. ), २२ उदस्थान देशे, २३ पृषदंश ( पृष, दंश का. ), २४ भल्लकीय, २५ रथंतर, २६ मध्यंदिन, २७ बृहत्, २८ महत्, २९ सत्त्वत् ( सत्त्वन्तु । सद्शब्दो मतुबन्त आगतनुक्को गृह्यते सत्त्वन्त्विति का. ), ३० कुरु, ३१ पञ्चाल, ३२ इन्द्रावसान, ३३ उष्णिह्, ३४ ककुभ्, ३५ सुवर्ण ( सुपर्ण ), ३६ देव, ३७ ग्रीष्मादच्छन्दसि । इत्युत्सादिः ।

## २७ उत्सङ्गादयः ४, ४, १५.

१ उत्सङ्ग, २ उडुप, ३ उत्पुत ( उत्पत का.), ४ उत्पन्न* (!), ५ उत्पुट*, ६ पिटक, ७ पिटाक, ८ उडप । इत्युत्सङ्गादिः ।

## २८ उद्गातादयः ५, १, १२९.

१ उद्गातृ, २ उन्नेतृ, ३ प्रतिहर्तृ, ४ प्रशास्तृ, ५ होतृ, ६ पोतृ, ७ हर्तृ (कर्तृ का.), ८ रथगणक, ९ पत्तिगणक ( पक्षिगणक, पत्रिगणक का. ), १० सुष्टु, ११ दुष्टु, १२ अध्वर्यु, १३ वधू, १४ सुभग मन्त्रे । इत्युद्गात्रादिः ।

## २९ उपकादयः २, ४, ६९.

१ उपक, २ लमक, ३ भ्रष्टक, ४ कपिष्ठल, ५ कृष्णाजिन, ६ कृष्णसुन्दर, ७ चूडारक, ८ आडरक (अण्डारक), ९ गडुक, १० उदङ्क, ११ सुधायुक ( सुपर्यक ), १२ अबन्धक, १३ पिङ्गलक*, १४ पिष्ट*, १५ सुपिष्ट ( सपिष्ट त. वि. ), १६ मयूरकर्ण, १७ खरीजङ्घ (°खारि° का. ), १८ शलाथल ( शलाबल का), १९ पतञ्जल, २० पदञ्जल, २१ कठेरणि, २२ कुषीतक, २३ काशकृत्स्न, २४ निदाघ, २५ कलशी-

कण्ठ, २६ दामकण्ठ, २७ कृष्णपिङ्गल, २८ कर्णक, २९ पर्णक, ३० जटिलक, ३१ बधिरक, ३२ जन्तुक, ३३ अनुलोम, ३४ अनुपद, ३५ प्रतिलोम, ३६ अपजग्ध, ३७ प्रतान, ३८ अनभिहित, ३९ कमक, ४० वटारक, ४१ लेखाभ्र, ४२ कमन्दक, ४३ पिञ्जूलक ( पिञ्जल का. ), ४४ वर्णक*, ४५ मसूरकर्ण, ४६ मदाघ, ४७ कवन्तक*, ४८ कमन्तक*, ४९ कदामत्त, ५० दामकण्ठ, ५१ पण्डारक एते उपकादयः।

## ३० उरःप्रभृतयः ५, ४, १५१.

१ उरस्, २ सर्पिस्, ३ उपानह्, ४ पुमान्, ५ अनड्वान्, ६ पयः, ७ नौः, ८ लक्ष्मीः, ९ दधि, १० मधु, ११ शालिः ( शाली ), १२ अर्थान्नञः । इत्युरआदिः ।

## ३१ ऊर्यादयः १, ४, ६१.

१ ऊरी, २ उररी ( अङ्गीकारे विस्तारे च का.), ३ तन्थी*, ४ ताली, ५ आताली, ६ वेताली, ७ धूली*, ८ धूसी, ९ शकला, १० संशकला, ११ ध्वंसकला, १२ भ्रंसकला ( भ्रंश° का. ), १३ गुलुगुधा, १४ सजुष (सजूः), १५ फल (फलू का), १६ फली, १७ विक्ली, १८ आक्ली, १९ आलोष्ठी, २० केवाली, २१ केवासी*, २२ सेवासी ( पर्याली* ), २३ शेवाली, २४ वर्षाली, २५ अत्यूमशा*, २६ वश्मसा*, २७ मस्मसा, २८ मसमसा, २९ औषट् ( श्रौषट् ), ३० वौषट्, ३१ वषट्, ३२ स्वाहा, ३३ स्वधा, ३४ बन्धा, ३५ प्रादुस्, ३६ श्रत् (श्रत्), ३७ आविस्, ३८ कराली ( का. ) । इत्यूर्यादयः।

## ३२ ऋगयनादयः ४, ३, ७३.

१ ऋगयन, २ पदव्याख्यान, ३ छन्दोमान, ४ छन्दोभाषा, ५ छन्दोविचिति, ६ न्याय, ७ पुनरुक्त, ८ निरुक्त, ९ व्याकरण, १० निगम, ११ वास्तुविद्या, १२ क्षत्रविद्या, १३ अङ्गविद्या, १४ विद्या, १५ उत्पात, १६ उत्पाद, १७ उद्याव, १८ संवत्सर, १९ मुहूर्त, २० उपनिषद्, २१ निमित्त, २२ शिक्षा, २३ भिक्षा, २४ छन्दोविजिति, २५ व्यायः । इत्यृगयनादिः ।

## ३३ ऋश्यादयः ४, २, ८०.

१ ऋश्य (ऋष्य), २ न्यग्रोध, ३ शर(शिरा का. ), ४ निलीन, ५ निवास, ६ निवात, ७ निधान, ८ निबन्ध ( निबन्धन, निबद्ध का.), ९ विबद्ध, १० परिगूढ, ११ उपगूढ, १२ असनि, १३ सित, १४ मत*, १५ वेश्मन्*, १६ उत्तराश्मन्, १७ अश्मन्*, १८ स्थूल, १९ बाहु (स्थूलबाहु का.), २० खदिर, २१ शर्करा, २२ अनडुह् ( अनडुह ), २३ अरडु*, २४ परिवंश, २५ वेणु, २६ वीरण, २७ खण्ड, २८ दण्ड*, २९ परिवृत्त, ३० कर्दम, ३१ अंशु । इत्यृश्यादिः ।

## ३४ ऐषुकार्यादयः ४, २, ५४.

१ ऐषुकारि, २ सारस्यायन(सारसायन), ३ चान्द्रायण, ४ द्व्याक्षायण, ५ त्र्याक्षायण (त्र्यायण का.), ६ औडायन, ७ जौलायन, ८ खाडायन, ९ दासामित्रि, १० दासामित्रायण, ११ शौद्रायण (शौद्राण का.), १२ दाक्षायण, १३ शायण्डायन* ( शापण्डायन ), १४ तार्क्ष्यायण, १५ शौभ्रायण, १६ सौवीर, १७ सौवीरायण*, १८ शयण्ड ( शपण्ड ), १९ शौण्ड, २० शयाण्ड ( शयाण्डि ), २१ वैश्वमानव, २२ वैश्वधेनव (वैश्वध्येनव), २३ नड ( नद का. ), २४ तुण्डदेव, २५ विश्वदेव ( विशदेव, वैश्वदेव का. ), २६ सापिण्डि, २७ शौण्डि, २८ सायण्डि, २९ अलायत, ३० औलालायत । इत्यैषुकार्यादिः ।

## ३५ कच्छादयः ४, २, १३३.

१ कच्छ, २ सिन्धु, ३ वर्णु, ४ गन्धार, ५ मधुमत, ६ कम्बोज, ७ कश्मीर, ८ साल्व, ९ कुरु, १० अनुषण्ड (अणु, अण्ड, खण्ड का.), ११ द्वीप, १२ अनूप, १३ अजवाह, १४ विजापक, १५ कलुतर ( कुलून का. ), १६ रङ्कु । इति कच्छादिः ।

## ३६ कडाराः २, २, ३८.

१ कडार, २ गड्डुल, ३ खञ्ज (खञ्जर का.), ४ खोड*, ५ काण, ६ कुण्ठ, ७ खलति, ८ गौर, ९ वृद्ध, १० भिक्षुक, ११ पिङ्ग*, १२ पिङ्गल ( पिङ्गल ), १३ तनु ( तनुतड त. वि ), १४ जठर, १५ बधिर*, १६ मठर*, १७ कश्र*, १८ बर्बर*, १९ वटर । इति कडारादिः ।

## ३७ कण्ड्वादयः ३, १, २७.

१ कण्डूञ्, २ मन्तु (मन्तुञ्), ३ हूणीङ्, ४ वल्गु, ५ असु (असुञ् का.), ६ मनस्, ७ महीङ्, ८ लाद्*, ९ लेट ( लेट् का. ), १० इरस्, ११ इरज्, १२ इरञ्, १३ दुवस्*, १४ उषस्*, १५ वेद्*, १६ मेधा, १७ कुषुभ, १८ नमस्*, १९ मगध, २० तन्तस्, २१ पम्पस् (पपस्), २२ सुख, २३ दुःख, २४ भिक्ष*, २५ चरण, २६ चरम*, २७ अवर*, २८ सपर, २९ अरर* ( अरर् ), ३० भिषज्, ३१ भिष्णज्, ३२ अपर*, ३३ आर*, ३४ इषुध, ३५ वरण*, ३६ चुरण, ३७ तुरण, ३८ भुरण, ३९ गद्गद्, ४० एला, ४१ केला, ४२ खेला, ४३ वेला*, ४४ शेला*, ४५ लिट्, ४६ लोट्, ४७ लेखा*, ४८ लेख*, ४९ रेखा*, ५० द्रवस्*, ५१ तिरस्*, ५२ अगद*, ५३ उरस्*, ५४ तरण* (तरिण), ५५ पयस्*, ५६ संभूयस्*, ५७ संवर*, ५८ अस्त्र, ५९ रुषय, ६० पुरण, आकृतिगण इति कण्ड्वादिः ।

## ३८ कण्वादयः ४, १, १०५.

( गर्गाद्यन्तर्गणः )

## ३९ कत्र्यादयः ४, २, ९५.

१ कत्रि, २ उम्भि, ३ पुष्कर, ४ पुष्कल, ५ मोदन, ६ कुम्भी, ७ कुण्डिन, ८ नगरी ( नगर का. ), ९ माहिष्मती, १० वर्मती (चर्मण्वती का. ), ११ उख्या, १२ ग्राम, १३ कुड्याया ( कुल्याया का. ), यलोपश्च, १४ वञ्जी, १५ भक्ति । इति कत्र्यादिः ।

## ४० कथादयः ४, ४, १०२.

१ कथा, २ विकथा, ३ विश्वकथा*, ४ संकथा*, ५ वितण्डा, ६ कुष्टविद् ( कुष्ट°; कुष्टचित् का. ), ७ जनवाद, ८ जनेवाद, ९ जनोवाद*, १० वृत्ति, ११ संग्रह ( सङ्गुह का. ), १२ गुण, १३ गण, १४ आयुर्वेद । इति कथादिः ।

## ( कम्बोजाः ४, १, १७३.

१ कम्बोज, २ चोल, ३ केरल, ४ शक, ५ यवन. इति कम्बोजादिः । )

## ४१ कक्र्यादयः ६, २, ८७.

१ कर्की (कर्कि), २ मघ्नी (मघ्नी मघी का.), ३ मकरी, ४ कर्कन्धु ( कर्कन्धू का. ), ५ शमी, ६ करीर (करीरि), ७ कन्दुक (कटुक का. ), ८ कवल ( कुबल, कुरल का. ), ९ बदरी ( बदर का .) इति कक्र्यादिः ।

## ४२ कर्णादयः (१) ४, २, ८०.

१ कर्ण, २ वसिष्ठ, ३ अर्क, ४ अर्कलूष(लूष का.), ५ द्रुपद (द्रुपद का.), ६ आनडुह्य(अन का. ), ७ पाञ्चजन्य, ८ स्फिज् (स्फिग), ९ कुम्भी, १० कुन्ती*, ११ जित्वन् (जित्व का.), १२ जीवन्त ( जीवन्ती का. ), १३ कुलिश, १४ आण्डीवत ( आण्डीवत् का.), १५ जव*,

१६ जैत्र*, १७ आनक* ( आकन का.), १८ अलुश, १९ शल, २० स्थिरा । इति कर्णादिः।

## ४३ कर्णादयः (२) ५, २, २४.

१ कर्ण, २ अक्षि, ३ नख, ४ मुख, ५ केश, ६ पाद, ७ गुल्फ, ८ भ्रू, ९ शृङ्ग (भ्रूभङ्ग। भ्रू, शृङ्ग का.), १० दन्त, ११ ओष्ठ, १२ पृष्ठ, १३ मख, १४ अङ्गुष्ठ । इति कर्णादिः ।

## ४४ कल्याण्यादयः ४, १, १२६.

१ कल्याणी, २ सुभगा, ३ दुर्भगा, ४ बन्धकी, ५ अनुदृष्टि, ६ अनुसृष्टि ( अनुसृति), ७ जरती, ८ बलीवर्दी (बलीवर्दी का.), ९ ज्येष्ठा, १० कनिष्ठा, ११ मध्यमा, १२ परस्त्री, इति कल्याण्यादिः ।

## ४५ कस्कादयः ८, ३, ४८.

१ कस्कः, २ कौतस्कुतः, ३ भ्रातुष्पुत्रः, ४ शुनस्कर्णः, ५ सद्यस्कालः, ६ सद्यस्क्रीः ७ साद्यस्क्रः, ८ कांस्कान्, ९ सर्पिष्कुण्डिका, १० धनुष्कपालम्, ११ बर्हिष्पलम् ( बर्हिष्पूलम् का. ), १२ यजुष्पात्रम्, १३ अयस्कान्तः*, १४ तमसकाण्डः*, १५ अयस्काण्डः, १६ मेदस्पिण्डः, १७ भास्करः*, १८ अहस्करः, आकृतिगणः। इति कस्कादिः।

## ४६ कार्तकौजपादयः ६, २, ३७.

१ कार्तकौजपौ, २ सावर्णिमाण्डूकेयौ ( सावर्णिमाण्डकेयौ ), ३ अवन्त्यश्मकाः (आ°का.), ४ पैलश्यापर्णेयाः, ५ कपिश्यापर्णेयाः, ६ शैतिकाक्षपाञ्चालेयाः, ७ कटुकवाधूलेयाः (कटुकवार्चलेयाः का.), ८ शाकलशुनकाः (शाकलसणकाः का.), ९ शाकलशणकाः*, १० शणकबाभ्रवाः (सणक°का.), ११ आर्चाभिमौद्गलाः, १२ कुन्तिसुराष्ट्राः, १३ चिन्तिसुराष्ट्राः, १४ तण्डवतण्डाः, १५ अविमत्तकामविद्धाः, १६ बाभ्रवशालङ्कायनाः, १७ बाभ्रवदानच्युताः, १८ कठकालापाः, १९ कठकौथुमाः, २० कौथुमलौकाक्षाः, २१ स्त्रीकुमारम्, २२ मौदपैप्पलादाः, २३ वत्सजरन्तः (°जरत् का.), २४ सौश्रुतपार्थवाः, २५ जरामृत्यू (°मृत्यू का.), २६ याज्यानुवाक्ये, २७ शुनकधात्रेयाः, २८ गर्गवत्साः । इति कार्तकौजपादिः ।

## ४७ काशादयः ४, २, ८०.

१ काश, २ पाश (वाश का.), ३ अश्वत्थ, ४ पलाश, ५ पीयूक्षा (पीयूष का), ६ चरण, ७ वास, ८ नड, ९ वन, १० कर्दम, ११ कच्छूल*, १२ कङ्कट, (कण्टक का.) १३ गुहा, १४ बिस (विश, विस का.), १५ तृण, १६ कर्पूर, १७ बर्बर*; १८ मधुर*, १९ ग्रह (गृह का), २० कपित्थ*, २१ जतु, २२ शीपाल, ( सीपाल )* २३ नर, २४ कण्टक । इति काशादिः ।

## ४८ काश्यादयः ४, २, ११६.

१ काशि, २ चेदि ( वेदि, बैदी का. ), ३ सांयाति*, ४ संवाह, ५ अच्युत, ६ मोदमान (मोहमान का. ), ७ शकुलाद, ८ हस्तिकर्षू, ९ कुनामन् (कुवामन्), १० हिरण्य, ११ करण, १२ गोवासन ( गोधाशन का.), १३ भारङ्गी*, १४ अरिंदम, १५ अरित्र*, १६ देवदत्त, १७ दशग्राम ( दासग्राम का.), १८ शौवावतान (सौधावतान का.), १९ युवराज, २० उपराज, २१ देवराज, २२ मोदन*, २३ सिन्धुमित्र, २४ दासमित्र, २५ सुधामित्र*, २६ सोममित्र, २७ छागमित्र, २८ सध मित्र* (साधुमित्र), २९ आपदादिपूर्वपदात् (आपद्, ऊर्ध्व, तद्, ) कालान्तात्, ३० संज्ञा, ३१ भौरिकि, ३२ भौलिङ्गि, ३३ सर्वमित्र, ३४ साधुमित्र । इति काश्यादिः ।

## ४९ काष्ठादयः ८, १, ६७.

१ काष्ठ, २ दारुण, ३ अमातापुत्र, ४वेश, ५ अनाज्ञात*, ६ अनुज्ञात, ७ अपुत्र*, ८ अयुत, ९ अद्भुत, १० अनुक्त, ११ भृश, १२ घोर, १३ सुख*, १४ परम, १५ सु, १६ अति, १७ कल्याण इति काष्ठादिः।

## ५० ( किंशुलकादयः )

## किंशुलुकादयः ६, ३, ११६.

१ किंशुलुक ( किंशुलक का. ), २ शाल्व (साल्वक), ३ नड* (नभ्र), ४ अञ्जन, ५ भञ्जन, ६ लोहित, ७ कुक्कुट । इति किंशुलुकादिः।

## ५१ किरादयः ७, २, ७५.

( धातुपाठे १४१०–१४१४ द्रष्टव्याः )

## ५२ किसरादयः

## (किशरादय)ः ४, ४, ५३.

१ किसर (किशर का.), २ नरद, ३ नलद, ४ स्थागल*, ५ तगर, ६ गुग्गुलु, ७ उशीर, ८ हरिद्रा, ९ हरिद्रु*, १० पर्णी* (पर्गी), ११ सुमङ्गल, १२ हरिद्रायणी । इति किसरादिः।

## ५३ कुञ्जादयः ४, १, ९८.

१ कुञ्ज, २ ब्रध्न, ३ शङ्ख, ४ भस्मन्, ५ गण, ६ लोमन्, ७ शठ, ८ शाक, ९ शुण्डा, १० शुभ, ११ विपाश् ( विपाश का. ), १२ स्कन्द, १३ स्कम्भ, १४ शाकट, १५ शुम्भा, १६ शिव, १७ शुभंया । इति कुञ्जादिः।

## ५४ कुटादयः १, २, १.

( धातुपाठे १३६७–१४०२ द्रष्टव्याः )

## ५५ कुमुदादयः ( १ ) ४, २, ८०.

१ कुमुद, २ शर्करा, ३ न्यग्रोध, ४ इत्कट (इत्कट, उत्कट का.), ५ सङ्कट, ६ कङ्कट, ७ गर्त, ८ बीज, ९ परिवाप, १० निर्यास*, ११ शकट*, १२ कच*, १३ मधु*, १४ शिरीष, १५ अश्व*, १६ अश्वत्थ, १७ बल्वज, १८ यवाष, १९ कूप, २० विकङ्कत (विकङ्कट), २१ दशग्राम, २२ कण्टक, २३ पलाश, २४ त्रिक, २५ कत । इति कुमुदादिः।

## ५६ कुमुदादयः ( २ ) ४, २, ८०.

१ कुमुद, २ गोमय (गोमथ), ३ रथकार, ४ दशग्राम, ५ अश्वत्थ, ६ शाल्मलि ( °ली का.), ७ शिरीष, ८ मुनिस्थल ( °स्थूल का.), ९ कुण्डल, १० कूट, ११ मधुकर्ण, १२ घासकुन्द*, १३ शुचिकर्ण, १४ सुचुकर्ण, १५ कुन्द । इति कुमुदादिः।

## ५७ कुम्भपद्यः ५, ४, १३९.

१ कुम्भपदी, २ एकपदी, ३ जालपदी, ४ शूलपदी*, ५ मुनिपदी, ६ गुणपदी*, ७ शतपदी, ८ सूत्रपदी, ९ गोधापदी, १० कलशीपदी, ११ विपदी*, १२ तृणापदी*, १३ द्विपदी, १४ त्रिपदी*, १५ षट्पदी*, १६ दासीपदी, १७ शितिपदी*, १८ विष्णुपदी*, १९ सुपदी, २० निष्पदी, २१ आर्द्रपदी, २२ कुणिपदी (कुणपदी का), २३ कृष्णापदी, २४ शुचिपदी*, २५ द्रोणापदी (द्रोणीपदी), २६ द्रुपदी, २७ सूकरपदी, २८ शकृत्पदी, २९ अष्टापदी, ३० स्थूणापदी (स्थूलपदी का.), ३१ अपदी*, ३२ सूचीपदी, ३३ मालापदी, ३४ गोपदी, ३५ घृतपदी, ३६ सूपपदी, ३७ पञ्चपदी, ३८ अर्वपदी, ३९ स्तनपदी, ४० कलहंसपदी, ४१ विषपदी । इति कुम्भपद्यादिः।

## ५८ कुर्वादयः ४, १, १५१.

१ कुरु, २ गर्गर (गर्ग का.), ३मङ्गुष, ४ अजमार ( अजमारक का. ), ५ रथकार, ६

वावदूक, ७ सम्राजः क्षत्रिये, ८ कवि, ९ विमाति (मति का. ), १० कापिञ्जलादि, ११ वाक् ( वाच् ) १२ वामरथ, १३ पितृमत्, १४ इन्द्रलाजी ( इन्द्रजालि का. ), १५ एजि*, १६ वातकि*, १७ दामोष्णीषि, १८ गणकारि, १९ कैशोरि, २० कुट, २१ शलाका (शालाका का.), २२ मुर, २३ पुर, २४ एरका (एरक का.), २५ शुभ्र*, २६ अभ्र, २७ दर्भ, २८ केशिनी, २९ वेनाच्छन्दासि, ३० शूर्पणाय, ३१ श्यावनाय, ३२ श्यावरथ, ३३ श्यावपुत्र, ३४ सत्यंकार, ३५ वडभीकार, ३६ पथिकार*, ३७ मूढ, ३८ शकन्धु, ३९ शङ्कु, ४० शाक, ४१ शाकिन् (शालिन्), ४२ शालीन*, ४३ कर्तृ, ४४ हर्तृ, ४५ इन, ४६ पिण्डी ( इनपिण्डी का. ), ४७ वामरथस्य कण्वादिवत्स्वरवर्जम्,४८ विस्फोटक, ४९ काक, ५० स्फाण्टक, ५१ घातकि· ५२ धेनुजि, ५३ बुद्धिकार । इति कुर्वादिः।

## ५९ कुलालादयः ४, ३, ११८.

१ कुलाल, २ वरुड, ३ चण्डाल, ४ निषाद, ५ किर्मार, ६ सेना, ७ सिरिध्र (सिरिन्ध्र), ८ सैरिन्ध्र ( सेन्द्रिय का. ), ९ देवराज, १० परिषद् (पर्षद्), ११ वधू, १२ मधु*, १३ रुरु, १४ रुद्र, १५ अनडुह् (अनड्ह), १६ ब्रह्मन्, १७ कुम्भकार, १८ श्वपाक, १९ ध्रुव । इति कुलालादिः।

## ६० कृतादयः २, १, ५९.

१ कृत, २ मित, ३ मत, ४ भूत, ५ उक्त, ६ युक्त*, ७ समाज्ञात, ८ समाम्नात, ९ समाख्यात, १० संभावित, ११ संसेवित*, १२ अवधारित, १३ अवकल्पित, १४ निराकृत, १५ उपकृत, १६ उपाकृत, १७ दृष्ट*, १८ कलित*, १९ दलित*, २० उदाहृत*, २१ विश्रुत, २२ उदित*, आकृतिगणः । इति कृतादिः ।

## ६१ कृशाश्वादयः ४, २, ८०.

१ कृशाश्व, २ अरिष्ट, ३ अरिश्म ( अरिश्व का. ), ४ वेश्मन्, ५ विशाल, ६ लोमश*, ७ रोमश*, ८ रोमक, ९ लोमक*, १० शबल, ११ कूट, १२ वर्चल*, १३ सुवर्चल*, १४ सुकर, १५ सूकर, १६ प्रतर (प्रातर), १७ सदृश, १८ पुरग, १९ पुराग*, २० सुख, २१ धूम, २२ अजिन, २३ विनत (विनता, वनिता का.),२४ अवनत,२५ विकुट्यास (कुविद्यास, विकुघास का.), २६ पराशर*, २७ अरुस्, २८ अयस्*, २९ मौद्गल्य, ३० यूकर* ( मौद्गल्याकर ), ३१ रोमन्, ३२ बर्बर, ३३ अवयास, अयावस् । इति कृशाश्वादिः ।

## ६२ कोटरादयः ६, ३, ११६.

१ कोटर, २ मिश्रक, ३ सिध्रक, ४ पुरग (पुरक का. ), ५ शारिक ( सारिक का. ) । इति कोटरादिः ।

## ६३ क्रत्वादयः ६, २, ११८.

१ क्रतु, २ दृशीक, ३ प्रतीक, ४ प्रतूर्ति (प्रपूर्ति का.), ५ हव्य, ६ भग। इति क्रत्वादिः।

## ६४ क्रमादयः ४, २, ६१.

१ क्रम, २ पद, ३ शिक्षा, ४ मीमांसा, ५ सामन् । इति क्रमादिः ।

## ६५ क्र्यादयः ३, १, ८१.

( धातुपाठे १४७४–१५३४ द्रष्टव्याः । )

## ६६ क्रोडादयः ४, १, ५६.

१ क्रोड, २ नख, ३ खुर, ४ गोखा*, ५ उखा, ६ शिखा*, ७ वाल, ८ शफ, ९ गुद आकृतिगण, १० भग, ११ गल, १२ घोणा, १३ गुल्फ. इति क्रोडादिः ।

## ६७ क्रौड्यादयः ४, १, ८०.

१ क्रौडि, २ लाडि, ३ व्याडि, ४ आपिशलि, ५ आपक्षिति, ६ चौपयत, ७ चैटयत (वैटयत), ८ सैकयत (शैकयत का.), ९ वैल्वयत (वैकल्पयत का.), १० सौधातकि, ११ सूत युवत्याम्, १२ भोज क्षत्रिये, १३ यौतकि*, १४ कौटि*, १५ भौरिकि, १६ भौलिकि, १७ शाल्मलि, १८ शालास्थलि, १९ कापिष्ठलि, २० गौकक्ष्य ( गौलक्ष्य का. )। इति क्रौड्यादिः।

## ६८ क्षुभ्नादयः ८, ४, ३९.

१ क्षुभ्ना ( क्षुभ्नाति ), २ नृनमन, ३ नन्दिन, ४ नन्दन, ५ नगर, एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति, ६ हरिनन्दी, ७ हरिनन्दनः, ८ गिरिनगरम्, ९ नृतिर्यङि प्रयोजयति, नरीनृत्यते; १० नर्तन, ११ गहन, १२ नन्दन, १३ निवेश, १४ निवास, १५ अग्नि, १६ अनूप, एतान्युत्तरपदानि प्रयोजयन्ति, १७ परिनर्तनम्, १८ परिगहनम्, १९ परिनन्दनम्, २० शरानिवेशः, २१ शरनिवासः, २२ शराग्निः, २३ दर्भानूपः, २४ आचार्यादणत्वं च आचार्यभोगीनः (आचार्यानी का.) आकृतिगणोऽयम्। पाठान्तरम्। त. वि ) क्षुम्ना, २५ तृप्नु, नृनमन, २६ नरनगर, नन्दन, यङ् नृती, २७ गिरिनदी, २८ गृहनमन, निवेश, निवास, अग्नि, अनूप, आचार्यभोगीन, २९ चतुर्हायन, ३० इरिकादीनि वनोत्तरपदानि संज्ञायाम्। इरिका तिमिर, समीर, कुबेर, हरि, कर्मार। आकृतिगणः। इति क्षुभ्नादिः।

## ६९ खण्डिकादयः ४, २, ४५.

१ खण्डिक (खण्डिका का.), २ वडवा, ३ क्षुद्रकमालवात्सेनासंज्ञायाम्, ४ भिक्षुक, ५ शुक, ६ उलूक, ७ श्वन, ८ अहन, ९ युगवरत्र (°वरत्रा, युग, वरत्रा का.), १० हलबन्ध (बन्धा)। इति खण्डिकादिः।



## ७० गम्यादयः ३, ३, ३.

१ गमी, २ आगमी ( आगामी का. ), ३ भावी, ४ प्रस्थायी, ५ प्रतिरोधी, ६ प्रतियोधी, ७ प्रतिबोधी, ८ प्रतियायी, ९ प्रतियोगी, १० आयायी। इति गम्यादिः।

## ७१ गर्गादयः ४, १, १०५.

१ गर्ग, २ वत्स, ३ वाज असे ( असमासे ), ४ संकृति, ५ अज, ६ व्याघ्रपाद्, ७ विदभृत्, ८ प्राचीनयोग, ९ अगस्ति, १० पुलस्ति, ११ चमस, १२ रेभ, १३ अग्निवेश, १४ शङ्ख, १५ शट ( शठ का. ), १६ शक*, १७ एक*, १८ धूम, १९ अवट, २० मनस् ( मनस का. ) २१ धनंजय, २२ वृक्ष, २३ विश्वावसु, २४ जरमाण ( जनमान का. ).

(लोहितादयः ४, १, १८.)

२५ लोहित, २६ संशित, २७ बभ्रु, २८ वल्गु*, २९ मण्डु, ३० गण्डु, ३१ शङ्कु ( शङ्क का. ), ३२ लिगु, ३३ गुहलु ( गुलु का. ), ३४ मन्तु, ३५ मङ्क्षु ( मक्षु का. ), ३६ अलिगु, ३७ जिगीषु, ३८ मनु, ३९ तन्तु, ४० मनायी, ४१ सूनु, ४२ कथक, ४३ कन्थक*, ४४ ऋक्ष*, ४५ वृक्ष* (तृक्ष), ४६ तनु*, ४७ तरुक्ष, ४८ तलुक्ष, ४९ तण्ड, ५० वतण्ड, ५१ कपि, ५२ कत ( कपिकत का. ), ५३ कष, ५४ भूत, ५५ कुरुकत, ५६ अनुडुह्, ५७ कवि, ५८ पुरुकुत्स, ५९ शक्ति,

( कण्वादयः ४, २, १११. )

६० कण्व, ६१ शकल, ६२ गोकक्ष, ६३ अगस्त्य, ६४ कुण्डिनी ( कण्डिनी कुण्डिन का. ), ६५ यज्ञवल्क, ६६ पर्णवल्क, ६७ अभयजात (उभय, जात का.), ६८ विरोहित, ६९ वृषगण, ७० रहूगण, ७१ शण्डिल, ७२ चणक ( वर्णक, वण का. ),

४१७ कञ्जिमृजिभ्यां चित् ।
४१८ कमेः किदुच्चोपधायाः ।
४१९ तुषारादयश्च ।
४२० दीङो नुट् च । ३·१४०
४२१ सर्तेरपः षुक्च ।
४२२ उषिकुटिदलिकचिखजिभ्यः कपन् ।
४२३ कणेः संप्रसारणं च ।
४२४ कपश्वाक्रवर्मणस्य ।
४२५ विटपपिष्टपविशिपोलपाः ।
४२६ वृतेस्तिकन् ।
४२७ कृतिभिदिलतिभ्यः कित् ।
४२८ इष्यशिभ्यां तकन् ।
४२९ इणस्तशन्तशसुनौ ।
४३० वीपतिभ्यां तनन् । ३·१५०
४३१ दृदलिभ्यां भः ।
४३२ अर्तिगृभ्यां भन् ।
४३३ इणः कित् ।
४३४ असिसञ्जिभ्यां क्थिन् ।
४३५ प्लुषिकुषिशुषिभ्यः क्सिः ।
४३६ अशेर्नित् ।
४३७ इषेः क्सुः ।
४३८ अवितृस्तृतन्त्रिभ्य ईः ।
४३९ यापोः किद् द्वे च ।
४४० लक्षेर्मुट् च । ३·१६०
इत्युणादिषु तृतीयः पादः ।

---

४४१ वातप्रमीः ।
४४२ ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजालिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः ।
४४३ श्रः करन् ।
४४४ पुषः कित् ।
४४५ कलश्च ।
४४६ गमेरिनिः ।
४४७ आङि णित् ।
४४८ भुवश्च ।
४४९ प्रे स्थः ।
४५० परमे कित् । ४·१०
४५१ मन्थः ।
४५२ पतस्थ च ।
४५३ खजेराकः ।
४५४ बलाकादयश्च ।
४५५ पिनाकादयश्च ।
४५६ कषिदूषिभ्यामीकन् ।

---

४१७ अ काजि° । ४१८ अ क कमेरुच्चो° । ४२० अ क नास्ति । अत्र उज्वलदत्तः— 'सूत्रमिदं सतीवृत्तौ देववृत्तौ च न दृश्यते' । दीनारशब्दो भोजेन तुषारादौ समावेशितः इति प्रक्रियासर्वस्वे । ४२४ अ कपंश्वा° क कवश्वा° । ४२९ अ क इणस्तशंस्त° । ४३७ अ इष्यशूभ्यां क्सुः । क इष्यशिभ्यां क्सुः । ४४० अ इतः परमधिकं सूत्रम् । युष्यसिभ्यां मदिक् । ४४२ अ °वन्यज्यर्पि° °कृशिभ्यः अत्निय° °शुजिष्णुजिशन् स्यन्निथिन्नुल्यशासानुकः । क–अत्निच्° । ४४५ क कलच् च उ. कलंश्च । ४५१ अ मन्थेः । क मथेः । ४५२ क पतेः स्थ च । ४५३ अ खञ्जेराकः । ४५४ अ क इतःपरम् शलिपटिपतिभ्यो नित् इत्यधिकम् ।

४५७ अनिदृषिभ्यां किच्च ।

४५८ चङ्कणः कङ्कणश्च ।

४५९ शॄपॄवॄञां द्वे रुक्चाभ्यासस्य ।

४६० फर्फरीकादयश्च । ४·२०

४६१ ईषेः किद्ध्रस्वश्च ।

४६२ ऋजेश्च ।

४६३ सर्तेर्नुम्च ।

४६४ मृडः कीकन्कङ्कणौ ।

४६५ अलीकादयश्च ।

४६६ कॄतॄभ्यामीषन् ।

४६७ शॄपॄभ्यां किच्च ।

४६८ अर्जेर्ऋज च ।

४६९ अम्बरीषः ।

४७० कॄशॄपॄकटिपटिशौटिभ्य ईरन् । ४·३०

४७१ वशेः कित् ।

४७२ कशेर्मुट् च ।

४७३ कृञ उच्च ।

४७४ घसेः किच्च ।

४७५ गभीरगम्भीरौ ।

४७६ विषा विहा ।

४७७ पच एलिमच् ।

४७८ शीङो धुक्लक्वलञ्वालनः

४७९ मृकणिभ्यामूकोकणौ ।

४८० वलेरूकः । ४·४०

४८१ उलूकादयश्च ।

४८२ शलिमण्डिभ्यामूकण् ।

४८३ नियो मिः ।

४८४ अर्तेरूच्च ।

४८५ भुवः कित् ।

४८६ अश्नोते रश्च ।

४८७ दल्मिः ।

४८८ वीज्याज्वरिभ्यो निः ।

४८९ सृवृषिभ्यां कित् ।

४९० अङ्गेर्नलोपश्च । ४·५०

४९१ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।

४९२ घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ।

४९३ वॄदॄभ्यां विन् ।

४९४ जॄशॄस्तॄजागृभ्यः क्विन् ।

४९५ दिवो द्वे दीर्घश्चाभ्यासस्य ।

४९६ कृविघृष्विछविस्थविकिकीदिवि ।

४९७ पातेर्डतिः ।

४९८ शकेर्ऋतिन् ।

---

४५७ अ क नास्ति । ४५८ अ चङ्कण्यतेः कङ्कण च । क चङ्कण्यते किङ्किण च । ४५९ अ °वृञां ४६० अ इतः परमधिकं सूत्रम् । अनिदृशिभ्यामीकन् । क अनिदृशिभ्यां किच्च । ४६१ क किदिति नास्ति । ४६२ क नास्ति । ४६३ उ. नक्च । ४६४ अ मृडेः कीकन्किकनौ । क मृडेः कीकन्ककनौ । ४६७ अ क–कित् । ४६८ अ अर्जेः कित् ऋज च । उ. °जश्च । ४६९ अम्बरीषश्च । ४७० क °पॄगकटि° ४७१ उ. दशःकित् । ४७६ अ क विसा विहा । ४७७ अ क इतः परमधिकम् । मिदेः किच्च । ४७८ अ –धुग्लग्वालन्वलञः । क– शङिस्धुवाल्म्वलञः । ४८० क वल्हेरूकः । ४८३ अ नयतेर्मिः । ४८४ अ अर्तेरू च । ४८८ क वीज्यात्वरि° । ४९१ अ क °युग्ला° । ४९३ अ क पॄदॄभ्यां विन् । ४९६ अ °छविदविस्थवि° किकिदीविः । क °स्थविदिविकिकिदीवि ।

४९९ अमेरतिः ।
५०० वहिवस्यर्तिभ्यश्चित् । ४·६०
५०१ अञ्चेः को वा ।
५०२ ह्न्तेरंह च ।
५०३ रमेर्नित् ।
५०४ सूङः क्रिः ।
५०५ अदिशदिभूशुभिभ्यः क्रिन् ।
५०६ वङ्क्र्यादयश्च ।
५०७ राशदिभ्यां त्रिप् ।
५०८ अदेस्त्रिन् ।
५०९ पतेरत्रिन् ।
५१० मृकणिभ्यामीचिः । ४·७०
५११ श्वयतेश्चित् ।
५१२ वेञो डिच्च ।
५१३ ऋहनिभ्यामूषन् ।
५१४ पुरः कुषन् ।
५१५ पॄनहिकलिभ्य उषच् ।
५१६ पीयेरूषन् ।
५१७ मस्जेर्नुम्च ।
५१८ गडेश्च ।
५१९ अर्तेररुः ।
५२० कुटः किच्च । ४·८०
५२१ शकादिभ्योऽटन् ।
५२२ कृकदिकडिकटिभ्योऽम्बच् ।
५२३ कदेर्णित्पक्षिणि ।
५२४ कलिकर्द्योरमः ।
५२५ कुणिपुल्योः किन्दच् ।
५२६ कुपेर्वा वश्च ।
५२७ नौ षञ्जेर्घथिन् ।
५२८ उध्वर्तेश्चित् ।
५२९ सर्तेर्णिच्च ।
५३० खर्जिपिञ्जादिभ्य ऊरोलचौ । ४·९०
५३१ कुवश्चट् दीर्घश्च ।
५३२ समीणः ।
५३३ सिवेष्टेरू च ।
५३४ शमेर्वन् ।
५३५ उल्बादयश्च ।
५३६ स्थः स्तोऽम्बजबकौ ।
५३७ शाशपिभ्यां ददनौ ।
५३८ अब्दादयश्च ।
५३९ वलिमलितनिभ्यः कयन् ।
५४० वृहोः षुग्दुकौ च । ४·१००

५०४ अ षूङः क्रिः । ५१२ अ वेञो डिन् । ५१३ अ °मुषन् । ५१४ अ क पुस्तकयोरितः परमधिकम् । विदिपुरोश्च । ५१५ अ क पॄकलिभ्यामुषन् । नहिकलिहनिलसिभ्य उषच् । ५१८ अ क नास्ति । उ पुस्तके गंडेश्च । इतः परमधिकम् । अङ्गूषः । ५२० अ क कुटः कित् । ५२१ क °भ्योऽटच् । इतः परमधिकम् । क पुस्तके अर्तिश्रूभ्यामुटच् । अ °मटुच् । ५२२ अ क कृकलि° । ५२३ अ कदेर्णिद्वा । इतः परमधिकम् । कृत्रश्च । ५२४ अ कर्दिकलोरमः । क कर्दिकल्योरमः । ५२६ क कुवश्च । ५२९ अ क सर्तेर्णित् । ५३० अ इतःपरमधिकं सूत्रद्वयम् । शृणातेर्णित् दीर्घश्च । तमेर्युक् च । क शृणातेर्दुक् दीर्घश्च । ५३२ अ नास्ति । ५३४ क शमेर्कन् । ५३६ अ क इतः परमधिकं सूत्रद्वयम् । हृसृभ्यां कनिप् । सृजेरम्च । क सृजेरश्च ।

५४१ मिपीभ्यां रुः ।
५४२ जम्ब्वादयश्च।
५४३ रुशातिभ्यां क्रुन् ।
५४४ जनिदाच्युसृवृमदिषामिनामिभृञ्भ्य इत्वन्त्वन्क्तण्क्निन्नशक्स्यढडटाटचः ।
५४५ अन्येभ्योऽपि दृश्यन्ते ।
५४६ कुसेरुम्भोमेदेताः ।
५४७ सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ।
५४८ मूशक्यविभ्यः क्लः ।
५४९ माछासासिभ्यो यः ।
५५० जनेर्यक् । ४·११०
५५१ अघ्न्यादयश्च ।
५५२ स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् ।
५५३ शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ।
५५४ धाप्योः संप्रसारणं च ।
५५५ अदेर्ध च ।
५५६ प्र ईरशदोस्तुट् च ।
५५७ सर्वधातुभ्य इन् ।
५५८ हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च ।
५५९ इगुपधात्कित् ।
५६० भ्रमेः संप्रसारणं च । ४·१२०
५६१ क्रमितमिशतिस्तम्भामत इच्च ।
५६२ मनेरुच्च ।
५६३ वर्णेर्वलिश्चाहिरण्ये ।
५६४ वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ् ।
५६५ नहो भश्च ।
५६६ कृषेर्वृद्धिश्छन्दसि ।
५६७ श्रः शकुनौ ।
५६८ कृञ उदीचां कारुषु ।
५६९ जनिघसिभ्यामिण् ।
५७० अज्यतिभ्यां च । ४·१३०
५७१ पादे च ।
५७२ अशिपणाय्योरुडायलुकौ च ।
५७३ वातेर्डिच्च ।
५७४ प्रे हरतेः कूपे ।
५७५ नौ व्यो यलोपः पूर्वस्य च दीर्घः ।
५७६ समाने ख्यः स चोदात्तः ।
५७७ आङि श्रिहनिभ्यां ह्रस्वश्च ।
५७८ अच इः ।

५४१ अ क मापो रुरी च । ५४३ अ क रुशातिभ्यां क्रुन् । ५४४ अ °मदिशादिनमि° °स्यक्स-ठटाटचः । क °त्वन्क्रन्क्निशक्छक्सठक्टगटचः । उ °स्यठह° । ५४६ अ क कुरुलोम्भोण्डोमेदेलाः किच्च । ५४७ अ °सिधर्णसि° क °सिसर्णसिवर्णसि° । ५४८ अ °स्यविभ्यः । उ मूङ्शक्य° । ५४९ अ °ससिसृभ्यो यः । ५५२ अ स्नापादिमद्यर्ति° क °द्यर्तिशकिभ्यो । ५५४ अ ध्याप्यायोः प्रसारणं च । क ध्याप्योः संप्रसारणं च । ५५५ अ क अतेर्धश्च । ५५६ अ प्रेरिसदोस्तुट् च । क प्र ईरसद्योस्तुट् च । ५५७ अ इतः परमधिकम् पचिपठिकाशिवाशिनदिभ्य इन् । क पचिपठिकाशिनन्दिभ्यो इन् । ५५८ अ क ° विदिकीर्तिभ्यश्च । ५६१ अ क्रमिगमिनामितमिस्तम्भामच इच्च । क क्रमितमि नमिस्तम्भामत इच्च । ५६३ अ वले वल चाहिरण्ये । क वलेर्वालि चाहिरण्ये । ५६४ अ °राजिभ्राजि-ध्वाजिसादि° । क °राजिघ्रजिध्वाजिसदिहनिकमिपाधिवदिवृभ्य इञ् । ५६८ क कृञ उदीचाम् । ५७२ अ आशिपाणिभ्यां रुङ्लुकौ च । क अशिपणाय्योरुङ्लुकौ । ५७३ अ क वेञो डित् । ५७४ अ प्रे भरतेः कूपे ।

५७९ खनिकष्यज्यसिवसिवनिसनिध्वनि-
ग्रन्थिचलिभ्यश्च ।

५८० वृतेश्छन्दसि । ४·१४०

५८१ भुजेः किच्च ।

५८२ कृगृशृपृकुटिभिदिछिदिभ्यश्च ।

५८३ कुडिकम्प्योर्नलोपश्च ।

५८४ सर्वधातुभ्यो मनिन् ।

५८५ बृंहेर्नोऽच्च ।

५८६ अशिशकिभ्यां छन्दसि ।

५८७ हृभृधृसृस्तृशृभ्य इमनिच् ।

५८८ जनिमृङ्भ्यामिमनिन् ।

५८९ वेञः सर्वत्र ।

५९० नामन्सीमन्व्योमन्रोमन्लोमन्पाप्म-
न्ध्मामन् । ४·१५०

५९१ मिथुने मनिः ।

५९२ सातिभ्यां मनिन्मनिणौ ।

५९३ हनिमशिभ्यां सिकन् ।

५९४ कोररन् ।

५९५ गिर उडच् ।

५९६ इन्देः कमिर्नलोपश्च ।

५९७ कायतेर्डिमिः ।

५९८ सर्वधातुभ्यः ष्ट्रन् ।

५९९ भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च ।

६०० दिवेर्ऋ च । ४·१६०

६०१ उषिखनिभ्यां कित् ।

६०२ सिविमुच्योष्टेरू च ।

६०३ अमिचिमिदिशसिभ्यः क्त्रः ।

६०४ पुवो ह्रस्वश्च ।

६०५ स्त्यायतेर्ड्रट् ।

६०६ गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ।

६०७ हुयामाश्रुभसिभ्यस्त्रन् ।

६०८ गमेरा च ।

६०९ दादिभ्यश्छन्दसि ।

६१० भूवादिगृभ्यो णित्रन् । ४·१७०

६११ चरेर्वृत्ते ।

६१२ अशित्रादिभ्य इत्रोत्रौ ।

६१३ अमेर्द्विषति चित् ।

६१४ आ समिण्निकषिभ्याम् ।

६१५ चितेः कणः कश्च ।

६१६ सूचेः स्मन् ।

६१७ पातेर्डुम्सुन् ।

६१८ रुचिभुजिभ्यां किष्यन् ।

६१९ वसेस्तिः ।

६२० सावसेः । ४·१८०

---

५७९ अ °ष्यं° °चरिभ्यश्च । क °ज्यासपुसिध्वनिसनिग्रन्थिचरिभ्यश्च । इतः परमधिकम् । अ उभेः द्वि च । क उभे द्विः । ५८१ क भुजेः कित् । ५८२ अ °पृतृकुटि° । ५८३ अ क कुण्ठि° । ५८५ अ बृंहेरम् नलोपश्च । अ इतः परमाधिकम् । उषिकुषिहृषिभ्यः । क उषिकुषिसृपिभ्यः कित् । ५८७ अ भृसृहृधृस्तृहूभ्य ईमनिन् । क भृसृहृधृस्तृसुभ्य ईमनिच् । ५८८ अ क जनिहृभ्यामिमनिन् । ५९० अ नामन्सामन्होमन्हेमन्रोमन्लोमन्व्योमन्विधर्मन्ध्यामन्पाप्मन् । क °न्सामन्होमन्हेम° । ५९१ अ क–मनिन् । ष्ट्रन् । ५९३–५९७ न सन्ति । ५९८ अ क ष्ट्रन् । ६०० अ उ. दिवेर्ऋश्च । ६०३ अ क °दिशंसिभ्यः कित् । ६०५ अ क स्त्री । ६०६ अ °स्त्रन् । ६०७ अ क पुस्तकयोः— व्युत्क्रमेण । क पुस्तके वर्णात्याधिकम् । ६०९ अ क इतःपरमधिकम् । भूवादिगृभ्यो णित्रन् । ६११ क चरेर्वृत्ते ह्रस्वश्च वा । ६१४ क आः समिणु° । ६१५ अ क नास्ति । ६१६ अ सूचेः स्मन् । ६१७ अ पातेर्डुम्सुन् । ६१८ अ क इतः परमधिकम् । वचेरूष्यन् । ६२० अ क नास्ति ।

६२१ वौ तसेः ।

६२२ पदिप्रथिभ्यां नित् ।

६२३ दृणातेर्ह्रस्वश्च ।

६२४ कृतॄकृपिभ्यः कीटन् ।

६२५ रुचिवचिकुचिकुटिभ्यः कितच् ।

६२६ कुटिकुषिभ्यां क्मलन् ।

६२७ कुषेर्लश्च ।

६२८ सर्वधातुभ्योऽसुन् ।

६२९ रपेरत एच्च ।

६३० अशेर्देवने युट् च ।  ४·१९०

६३१ उब्जेर्बले बलोपश्च ।

६३२ श्वेः संप्रसारणं च ।

६३३ श्रयतेः स्वाङ्गे शिरः किच्च ।

६३४ अर्तेरुच्च ।

६३५ व्याधौ शुट् च ।

६३६ उदके नुट् च ।

६३७ इण आगसि ।

६३८ रिचेर्धने घिच्च ।

६३९ चायतेरन्ने ह्रस्वश्च ।

६४० वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ।

६४१ स्रुरिभ्यां तुट् च ।  ४·२०१

६४२ पातेर्बले जुट् च ।

६४३ उदके थुट् च ।

६४४ अन्ने च ।

६४५ अदेर्नुम्धौ च ।

६४६ स्कन्देश्च स्वाङ्गे ।

६४७ आपः कर्माख्यायाम् ।

६४८ रूपे जुट् च ।

६४९ उदके नुम्भौ च ।

६५० नहेर्दिवि भश्च ।  ४·२१०

६५१ इण आगोऽपराधे च ।

६५२ अमेर्हुक्च ।

६५३ रमेश्च ।

६५४ देशेऽह च ।

६५५ अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ।

६५६ भूरञ्जिभ्यां कित् ।

६५७ वसेर्णित् ।

६५८ चन्देरादेश्च छः ।

६५९ पचिवाचिभ्यां सुट् च ।

६६० वहिहाधाञ्भ्यश्छन्दसि ।  ४·२२०

६६१ इण आसिः ।

६६२ मिथुनेऽसिः पूर्ववच्च सर्वम् ।

६६३ नञि हन एह च ।

६६४ विधाञो वेध च ।

६६५ नुवो धुट् च ।

---

६२२ अ क प्रथेर्नित् । ६२५ अ क °वचिकुत्सिकुशिभ्यः-- । ६२६ अ कुठि° क्मलच् । ६२९ अ क रपेरत एच्च इत्यस्य स्थाने पिबतेरीच्च । ६३० अ अशेर्भगे युट् च । क अशेर्युट् । ६३१ क अब्जेर्बलोपश्च । ६३८ अ--किच्च । क --घित् । उ. घित् किच्च । ६३९ अ चायेरन्ने- । ६४० उ. स्वरूपाङ्गयोः । ६४५ अ क अदेर्नुम्धश्च । ६४७ अ आपः कर्माख्यायां ह्रस्वश्च वा नुम् । क -- नुट् च वा । उ. ह्रस्वस्तुट् च वा । ६४९ अ क उदके नुम्भश्च । ६५१ अ क चकारो नास्ति । ६५४ अ क देशेऽहश्च । ६५५ अ -- मृजां । क °भ्रस्जां । ६५६ क °रञ्जिमिथितृपृभ्यः कित् । ६५७ अ वसेर्णित् । ६५८ अ °आदेश्छः । ६६० अ क °धाभ्य-- । ६६३ नाञि हन एह च । उ. नञ्या° ।

६६६ गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च ।
६६७ चन्द्रे मो डित् ।
६६८ वयसि धाञः ।
६६९ पयसि च ।
६७० पुरसि च । ४·२३०
६७१ पुरूरवाः ।
६७२ चक्षेर्बहुलं शिच्च ।
६७३ उषः कित् ।
६७४ दमेरुनसिः ।
६७५ अङ्गतेरसिरिरुडागमश्च ।
६७६ सर्तेरप्पूर्वादसिः ।
६७७ विदिभुजिभ्यां विश्वे ।
६७८ वशेः कनसिः । ४·२३८

इत्युणादिषु चतुर्थः पादः ॥

---

६७९ अदि भुवो डुतच् ।
६८० गुधेरूमः ।
६८१ मसेरूरन् ।
६८२ स्थः किच्च ।
६८३ पातेरतिः ।
६८४ वातेर्नित् ।
६८५ अर्तेश्च ।
६८६ तृहेः क्नो हलोपश्च ।
६८७ वृञ्लुटितनिताडिभ्य उलन् तण्डश्च ।
६८८ दंसेष्टटनौ न आ च । ५·१०
६८९ दंशेश्च ।
६९० उदि चेडैसिः ।
६९१ नौ दीर्घश्च ।
६९२ सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः ।
६९३ पूङो यण्णुक् ह्रस्वश्च ।
६९४ संसेः शि कुट् किच्च ।
६९५ अर्तेः क्युरुच्च ।
६९६ हिंसेरीरन्नीरचौ ।
६९७ उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ।
६९८ डित्खनेर्मुट् स चोदात्तः । ५·२०
६९९ अमेः सन् ।
७०० मुहेः खो मूर्च ।
७०१ नहेर्हलोपश्च ।
७०२ शीङो ह्रस्वश्च ।
७०३ माङ ऊखो मय् च ।

---

६६६ अ क °कारकयोरपि पूर्व° । उ. °कारकयोः पू° । ६६७ क– डिच । ६७४ अ क °रू° । ६७५–६७६ अ क उ. अङ्गिरा अप्सराः । क इतः परमधिकं सूत्रम् । ऊधः । ६८३ अ क पातेरातिः । ६८६ अ –क्नन् । ६८७ अ °तनितटितण्डिभ्य उलच् । क °तनितडितण्डिभ्य उलच् । क पुस्तके इतःपरमधिकानि सूत्राणि । हृषिमङ्गिशाङ्किचटिवन्दिभ्यश्च । १ । कुमुलतुमुलमुकुलमञ्जुलादयश्च । २ । उलुखायश्च । ३ । कटिपटिमदिलविलिलिकल्यनिरटिलटितृभ्यो हल् च । ४ । पुलेः किच्च । ५ । कलादिभ्यः कित् । ६ । एतानि षट् सूत्राणि व्याख्यासु न दृष्टानि इति सर्वस्वे । ६८८ उ. –आत् । ६९२ अ क पुस्तकयोः सूत्रद्वयमेतत् । –क्तः । दमे–इति । ६९४ अ क पुस्तकयोः– शिः– । ६९५ अ अर्तेः क्युरुश्च । क अर्तेः क्युनुच्च । उ. अर्तेः क्युजुच्च । ६९६ अ °रलचौ पूर्वपदान्तलोपश्च । क °रलचौ– । ६९८ अ क उ. °ट् चो° इतःपरमाधिकम् । हन्तेश्च द्वे । ६९९ अ क अमेरसन् । ७०१ अ नहेर्लोपश्च । इतः परमधिकम् । महेश्च । ७०२ अ क नित् इत्यधिकम् । इतः परमाधिकं सूत्रम् 'शाखा' इति । ७०३ उ. –मय– । क. माङ उखः ।

७०४ कलिगलिभ्यां फगस्योच्च ।

७०५ स्पृशेः श्वण्शुनौ पृ च ।

७०६ श्मनि श्रयतेर्डुन् ।

७०७ अश्वादयश्च ।

७०८ जनेष्टन् लोपश्च । ५·३०

७०९ अच् तस्य जङ्घच् ।

७१० हन्तेः शरीरावयवे द्वे च ।

७११ क्लिशेरन् लो लोपश्च ।

७१२ फलेरितजादेश्च पः ।

७१३ कृञादिभ्यः संज्ञायां वुन् ।

७१४ चीकयतेराद्यन्तविपर्ययश्च ।

७१५ पचिमच्योरिच्चोपधायाः ।

७१६ जनेररष्ठ च ।

७१७ वचिमनिभ्यां चिच्च ।

७१८ ऊर्जि दृणातेरलचौ पूर्वपदान्त्यलोपश्च । ५·४०

७१९ कृदरादयश्च ।

७२० हन्तेर्युलाद्यन्तयोर्घत्वतत्वे ।

७२१ क्रमिगमिक्षमिभ्यस्तुन्वृद्धिश्च ।

७२२ हर्यतेः कन्यन्हिरं च ।

७२३ कृञः पासः ।

७२४ जनेस्तु रश्च ।

७२५ ऊर्णोतेर्डः ।

७२६ दधातेर्यत् नुट् च ।

७२७ जीर्यतेः क्रिन् रश्च वः ।

७२८ मव्यतेर्यलोपो मश्चापतुट् चालः ।

७२९ ऋजेः कीकन् ।

७३० तनोतेर्डउः सन्वच्च ।

७३१ अर्भकपृथुकपाका वयसि ।

७३२ अवद्यावमाधमार्वरेफाः कुत्सिते ।

७३३ लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषण-कुत्सितयोः ।

७३४ क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ।

७३५ अश्नोतेराशुकर्मणि वरट् च ।

७३६ चतेरुरन् ।

७३७ प्रा(प्रे ऽ)ततेररन् ।

७३८ अमेस्तुट् च । ५·६०

७३९ दहेर्गो लोपो दश्च नः ।

७४० सिचेः संज्ञायां हनुमौ कश्च ।

---

७०८ अ क जनेष्टन् नलोपश्च । ७०९ अ तस्य जङ्घ च । क – जङ्घ च । अ क इतः परमधिके सूत्रे । लूञो मनिन् । अ क्लिशेरन्ललोपश्च । क क्लिशेरन् लोलोपश्च । ७१५ उ. °रिच्च । ७१६ अ °ठश्च । ७१७अ क पाचिवादिभ्यामिच्च । इतः परमाधिकम् । वाचिमानिभ्यां चिद्वा । ७२० अ क °युजाद्य° । ७२१ इतः परमाधिकानि सूत्राणि । अ क गुहः कन् । करोतेर्द्वे च । विषेर्ण्यातिकर्मणि । ७२२ अ -हिरश्च । क –हिर् च । ७२३ क कृञः कृत्र् । अ इतः परमाधिकम् । कठिचकिभ्यामोरः । ७२४ अ क जनेस्तो-रश्च । अ इनट् च । क डोऽट् च । ७२७ अ जीर्यतेः क्रिद्रश्च पुग्वा । ७२८ अ–मश्चापोऽप्तुट्– । क नास्ति । ७३० तितउशब्दः स्त्रीनपुंसकयोर्वर्तते । चालनी तितउः पुमान् इत्यमरे प्रमादः । इति उज्ज्वल-दत्तः । ७३२ अ अवद्यावमार्याः कुत्सिते । ७३३ अ क उ. लीङ्° ह्रस्वश्च पुट्(क) तरौ श्लेष्म° । ७३४ अ क क्लिशेरी– । इतः परमाधिकं सूत्रम् । आप्नोतेः क्विब्ह्रस्वश्च । ७३७–७३८ अ क न स्तः । ७३९ अ एतत् 'नगो प्राणिष्वन्यतरस्याम्' ( पा. सू. ६·३·७६ ) इति नगशब्दस्य सिद्धत्वादनर्थकमित्याहुः । ७४० अ क– कन्मुंहो च ।

७४१ व्याङि घ्रातेश्च जातौ ।

७४२ हन्तेरच् घुर च ।

७४३ क्षमेरुपधालोपश्च ।

७४४ तरतेर्ड्रिः ।

७४५ ग्रहेरनिः ।

७४६ प्रथेरमच् ।

७४७ चरेश्च ।

७४८ मङ्गेरलच् । ५·७०

इत्युणादिषु पञ्चमः पादः* ॥

---

* उणादिसूत्रस्था गणास्तत्रत्याः साधिताः शब्दा उज्ज्वलदत्तभट्टोजिश्वेतवनवासिनारायणभट्टप्रभृतीनां टीकाभ्यः समुद्धृत्याधस्तान्निर्दिश्यन्ते । एतादृशा अन्येऽपि शब्दा अत्र समावेशिता भवन्तीति लक्ष्यते ।

### १ अघ्न्यादयः ५५१.

१ अघ्न्या, २ अघ्न्य, ३ कन्या, ४ वन्ध्या, ५ सन्ध्या, ६ कौतेर्दुक् च ( ग. सू. १ ), ७ कुड्य, ८ मनो ध च ( ग. सू. २ ), ९ मध्य, १० वध्य । इति अघ्न्यादिः ।

### २ अब्दादयः ५३८.

१ अब्द, २ कौतेर्नुम् च ( ग. सू. ३ ), ३ कुन्दः, ४ वृन्दः, ५ कन्दः, ६ तुन्दः । इति अब्दादिः ।

### ३ अलीकादयः ४६५.

१ अलीक, २ वलीक, ३ वल्मीक, ४ बल्लेर्वृद्धिश्च ( ग. सू. ४ ), ५ वाहीकः, ६ सुमलीकः । ( एवमन्येऽपि ) । इति अलीकादिः ।

### ४ अश्यादयः ६१२.

१ अशित्र, २ वहित्र, ३ धरित्री, ४ करित्र, ५ वधित्र । इति अश्यादिः ।

### ५ अश्वादयः ७०७.

१ अश्रु ( एवमन्येऽपि यथाप्रयोगमूहनीयाः ) । इति अश्वादिः ।

### ६ उलूकादयः ४८१.

१ उलूकः, २ वावदूकः, ३ भल्लूकः, ४ शमेर्बुक् च ( ग. सू. ५ ), ५ शम्बूकः । इति उलकादिः ।

### ७ उल्वादयः ५३५.

१ उल्व, २ शुल्व, ३ निम्ब, ४ बिम्ब, ५ धन्व, ६ जम्ब । इति उल्वादिः ।

### ८ किशोरादयः ६५.

१ किशोर, २ सहोर, ३ गौर । इति किशोरादिः ।

### ९ कृञादयः ७१३.

१ करक, २ कटक, ३ नरक, ४ सरक, ५ अलक, ६ कोरक । इति कृञादिः ।

### १० कृदरादयः ७१९.

१ कुदर, २ मृदर, ३ सूदर । इति कृदरादिः ।

### ११ क्षुदादयः २५०.

१ क्षप्तृ, २ क्षोतृ, ३ उन्नेतृ । इति क्षदादिः ।

### १२ गुपादयः ५६.

१ गुपिल, २ तिजिल, ३ पूजिल, ४ शुषिल, ५ वेविल ६ कुटिल । इति गुपादिः ।

---

७४१ अ क इतः परमधिकं सूत्रम् । छापूङ् खडिभ्यो गक् । ७४२ अ हन्तेर्घुरच् । क हन्तेः घुर । ७४३–७४४ अ क न स्तः । ७४५ अ क °रणिः । तनोतेः डउः सन्वच्च ।

### १३ जम्ब्वादयः ५४२.

१ जम्बु, २ शिग्रु, ३ वितड्डु, ४ कड्डु, ५ अश्रु, ६ अश्रु । इति जम्ब्वादिः ।

### १४ तरत्यादयः ११७.

१ तरङ्ग, २ लवङ्ग । आकृतिगणोऽयम् । इति तरत्यादिः ।

### १५ तुषारादयः ४१९.

१ तुषार, २ कासार, ३ सहार, ४ तर्कार । इति तुषारादिः ।

### १६ त्रादयः ६१२.

१ तोत्र, २ लोत्र, ३ वरुत्र । इति त्रादिः ।

### १७ पिञ्जादयः ५३०.

१ पिञ्जूल, २ कञ्चूल, ३ लङ्केर्वृद्धिश्च ( ग. सू. ६ ), ४ लाङ्गुल, ५ तमेर्वृद्धीर्घत्वे ( ग. सू. ७ ), ६ ताम्बूल, ७ शृणातेर्दुक ह्रस्वश्च ( ग. सू. ८ ), ८ शार्दुल, ९ दुक्नोः कुक्च (ग. सू. ९), १० दुकूल, ११ कुसूल, कुकूल । इति पिञ्जादिः ।

### १८ पिनाकादयः ४५५.

१ पिनाक, २ तडाक, ३ भवाक, ४ श्मामाक, ५ नभाक, ६ पिण्याक, ७ वार्ताक, ८ गुवाक । इति पिनाकादिः ।

### १९ फर्फरीकादयः ४६०.

१ फर्फरीक, २ दर्दरीक, ३ कर्करीक, ४ झर्झरीक, ५ तिमेर्मकारस्य उकारोऽभ्यासस्य नुट् च (ग. सू. १०) । ६ तिम्तिडीक, ७ चरेर्नुम् च ( ग. सू. ११ ), ८ चञ्चरीक, ९ मर्मरीक, १० कर्करीका, ११ पुण्डरीक । इति फर्फरीकादिः ॥

### २० बलाकादयः ४२४.

१ बलाका, २ मनाका, ३ पवाका, ४ शलाका, ५ पटाक, ६ पताका । इति बलाकादिः ।

### २१ मद्गुरादयः ४१.

१ मद्गुर, २ कर्बुर, ३ बन्धुर, ४ चिनोतेः कुक् च ( ग. सू. १२), ५ चिकुर, ६ कोकतेर्कुक् च ( ग. सू. १३ ), ७ कुकुर, ८ कुक्कुर, ९ आतुर, १० वागुरा, ११ प्रत्ययरेफस्य लत्वं वङ्केर्नलोपश्च (ग. सू.१४), १२ वाकुल, १३ वकुल । इति मद्गुरादिः ।

### २२ मिथिलादयः ५७.

१ मिथिल, २ गतिला, ३ तकिला, ४ चण्डिला, ५ पाथिल, ६ शिथिला । इति मिथिलादिः ।

### २३ मूलेरादयः ६१.

१ मूलेर, २ गुधेर, ३ गुहेर, ४ मुहेर, ५ कुटेर, ६ गुवेर, ७ कडेर । इति मूलेरादिः ।

### २४ मृगय्वादयः ३७.

१ मृगयु, २ देवयु, ३ मित्रयु, ४ कुमारयु, ५ अध्वर्यु, ६ कुहु, ७ पाण्डु, ८ पीलु, ९ मञ्जु, १० कण्डु, ११ मृकण्डु, १२ गृहयु, (एव, १३ निघण्टु, १४ पलाण्डु, १५ कर्करेटु, १६ करेटु, १७ पेरु, १८ डमरु प्रभृतयोऽप्यत्रैव द्रष्टव्याः ) । इति मृगय्वादिः ।

### २५ वङ्क्यादयः ५०६.

१ वङ्क्रि, २ वप्रि, ३ अङ्घ्रि, ४ तन्द्रि, ५ भेरि । इति वङ्क्यादिः ।

### २६ विडादयः ११८.

१ विडङ्ग, २ मृदङ्ग, ३ कुरङ्ग । इति विडादिः ।

### २७ वृषादयः १०६.

१ वृषल, २ कुशल, ३ पलल, ४ वेवल, ५ तरल, ६ सरल, ७ धवल, ८ कमेर्वुक् च

(म. सू. १५), ९ कम्बल, १० मुशल, ११ मुसल, १२ कोशल, १३ लाङ्गल, १४ कदली, १५ कुड्मल, १६ कुटिकाशिकौतिभ्यः प्रत्ययस्य मुट् च (म. सू. १६), १७ कुड्मल, १८ कश्मल, १९ पिङ्गल, २० सम्बल, २१ शम्बल। इति वृषादिः।

२८ शकादयः ५२१.

१ शकट, २ वरट, ३ कङ्कट, ४ सरट, ५ वेवट, ६ करट, ७ कपट, ८ कर्कट, ९ मर्कट, १० कर्पट, ११ पर्पट, १२ ककखट, १३ चपेट, १४ चपट, १५ मथट, (एवमन्येऽपि कदटादयो बोद्धव्याः)। इति शकटादिः।

इति शाकटायनप्रणीत उणादिसूत्रपाठः समाप्तः।

---

शान्तनवाचार्यप्रणीतः

# फिट्सूत्रपाठः

१ फिषोऽन्त उदात्तः।
२ पाटलापालङ्काम्बासागरार्थानाम्।
३ गेहार्थानामस्त्रियाम्।
४ गुदस्य च।
५ ध्यपूर्वस्य स्त्रीविषयस्य।
६ स्वान्तस्याश्मादेः।
७ बंहिष्ठवत्सरतिशत्थान्तानाम्।
८ दक्षिणस्य साधौ।
९ स्वाङ्गाख्यायामादिर्वा।
१० छन्दसि च।
११ कृष्णस्यामृगाख्या चेत्।
१२ वा नामधेयस्य।
१३ शुक्लगौरयोरादिः।
१४ अङ्गुष्ठोदकबकवशानां छन्दस्यन्तः।
१५ पृष्ठस्य च।
१६ अर्जुनस्य तृणाख्या चेत्।
१७ आर्यस्य स्वाम्याख्या चेत्।
१८ आशाया अदिगाख्या चेत्।
१९ नक्षत्राणामाब्विषयाणाम्।
२० न कुपूर्वस्य कृत्तिकाख्या चेत्।
२१ घृतादीनां च।
२२ ज्येष्ठकनिष्ठयोर्वयसि।
२३ बिल्वतिष्ययो स्वरितो वा।

इति फिट्सूत्रेषु प्रथमः पादः॥

२४ अथादिः प्राक् शकटेः ।
२५ ह्रस्वान्तस्य स्त्रीविषयस्य ।
२६ नब्विषयस्यानिसन्तस्य ।
२७ तृणधान्यानां च द्व्यषाम् ।
२८ त्रः संख्यायाः ।
२९ स्वाङ्गशिटामदन्तानाम् ।
३० प्राणिनां कुपूर्वम् ।
३१ खय्युवर्णं कृत्रिमाख्या चेत् ।
३२ उनर्वन्नन्तानाम् ।
३३ वर्णानां तणतिनितान्तानाम् ।
३४ ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये ।
३५ अक्षस्यादेवनस्य ।
३६ अर्धस्यासमद्योतने ।
३७ पीतद्र्वर्थानाम् ।
३८ ग्रामादीनां च ।
३९ लुबन्तस्योपमेयनामधेयस्य ।
४० न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम् ।
४१ राजविशेषस्य यमन्वा चेत् ।
४२ लघावन्ते द्वयोश्च बह्वषो गुरुः ।
४३ स्त्रीविषयवर्णाक्षुपूर्वाणाम् ।
४४ शकुनीनां च लघु पूर्वम् ।
४५ नर्तुप्राण्याख्यायाम् ।
४६ धान्यानां च वृद्धक्षान्तानाम् ।
४७ जनपदशब्दानामषान्तानाम् ।
४८ ह्यादीनामसंयुक्तलान्तानामन्तः पूर्वं वा ।
४९ इगन्तानां च द्व्यषाम् ।

इति फिट्सूत्रेषु द्वितीयः पादः ॥

---

५० अथ द्वितीयं प्रागीषात् ।
५१ त्र्यचां प्राङ् मकरात् ।
५२ स्वाङ्गानामकुर्वादीनाम् ।
५३ मादीनां च ।
५४ शादीनां शाकानाम् ।
५५ पान्तानां गुर्वादीनाम् ।
५६ युतान्यण्यन्तानाम् ।
५७ मकरवरूढपारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा ।
५८ छन्दसि च ।
५९ कर्दमादीनां च ।
६० सुगन्धितेजनस्य ते वा ।
६१ नपः फलान्तानाम् ।
६२ यान्तस्यान्त्यात्पूर्वम् ।
६३ थान्तस्य च नालघुनी ।
६४ शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च ।
६५ सांकाश्यकाम्पिल्यनासिक्यदार्वाघाटानाम् ।
६६ ईषान्तस्य हयादेरादिर्वा ।
६७ उशीरदाशेरकपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवराणाम् ।
६८ महिष्यषाढयोर्जायेष्टकाख्या चेत् ।

इति फिट्सूत्रेषु तृतीयः पादः ।

---

६९ शकटिशकट्योरक्षरमक्षरं पर्यायेण ।
७० गोष्ठजस्य ब्राह्मणनामधेयस्य ।
७१ पारावतस्योपोत्तमवर्जम् ।

७२ घृम्रजानुमुञ्जकेशकालवालस्थालीपाका-
नामघूजलस्थानाम् ।

७३ कपिकेशहरिकेशयोश्छन्दसि ।

७४ न्यङ्स्वरौ स्वरितौ ।

७५ न्यर्बुदव्यल्कशयोरादिः ।

७६ तिल्यशिक्यमत्यकार्ष्मर्यधान्यकन्या-
राजन्यमनुष्याणामन्तः ।

७७ बिल्वभक्ष्यवीर्याणि छन्दसि ।

७८ त्वत्त्वसमसिमेत्यनुच्चानि ।

७९ सिमस्याथर्वणेऽन्त उदात्तः ।

८० निपाता आद्युदात्ताः ।

८१ उपसर्गाश्चाभिवर्जम् ।

८२ एवादीनामन्तः ।

८३ वाचादीनामुभावुदात्तौ ।

८४ चादयोऽनुदात्ताः ।

८५ यथेति पादान्ते ।

८६ प्रकारादिद्विरुक्तौ ।

८७ शेषं सर्वमनुदात्तम् ।

इति फिट्सूत्रेषु चतुर्थः पादः ।

---

॥ इति शान्तनवाचार्यप्रणीतः फिट्सूत्रपाठः ॥

## परिशिष्टम् ।

२२८ उणादि ( ग. ) ३·४·७५.
३५९ सौत्रधातुकोशः ( अवशिष्टः )
कर्क १·८१. उ. नारायणटीका.
कर्प १·८१. उ. नारायणटीका.
कश ४·३२ उ.
कुश १·१०८ उ.
चक १·३८ उ.
धमि २·१०२ उ.
पर्प १·८१. उ. नारायणटीका.
मञ्जि १·३७ उ.
मर्क १·८१. उ. नारायणटीका.
मर्च ३·४३ उ.
मिथ ३·५५ उ.
लत ३·१४७ उ.
शाति ४·१२१ उ.
शु २·२६ उ.
स्तम्भ ४·१२१ उ.
३६१ अध्यापक १८५,६.
३६९ उत्सादक १८५,७.
उत्साहक १८५,७.
३७० उद्वर्तक १८५,८.
३७९ कोशातकी ८१,१४२.
३८९ दहन ८१,१५९.
३९८ पूजक १८५,२.
पृथिवी ८१,१४६.
३९९ प्रयाण २४०,१५.
४०१ ब्रम्बाविश्ववयसौ २०५,९.
४०८ रथगणक १८५,११.
४११ वरी ८१,१४४.
४१७ शमी ८१,१४३.
शरी ८१,१४५.
४२५ सृगेठ ८१,१५०.
४२६ स्नातक १८५,५.
स्नापक १८५,५.
४२७ हरितकी ८१,१४१.
हरीतकी ८१,१४१.
४२८ होतृ १८५,९.
४३३ काश १८०.
४३४ कुश १८०.

# संक्षेपचिह्नानि।

| | |
|---|---|
| अ. | अव्ययम् । |
| अनु. । अनुक. | अनुकरणम् । |
| आ. । आग. | आगमः । |
| आदे. | आदेशः । |
| उप. । उ. स. | उपसर्गः । |
| ऋ. | ऋषिः । |
| ओ. । औ. | औषधिः । |
| का. प. | कालपरिमाणम् । |
| का. वा. | कालवाचकम् । |
| खा. । खा. पे. | खाद्यपेये । |
| ग. | गणः । |
| गृह्यो. | गृह्योपकरणम् । |
| ग्रं. | ग्रन्थः । |
| ग्रं. का. | ग्रन्थकारः । |
| जा. | जातिः । |
| ज्यो. । ज्यौ. | ज्यौतिषम् । |
| दे. | देवः, दशः । |
| धा. | धातुः ( भ्वादिधातुस्तथा सुवर्णादिधातुश्च ) । |
| न. | नदी । नक्षत्रम् । |
| नि. | निपातनम् । |
| प. । पशु. | पशुः । |
| पक्षि. । | पक्षिन् । |
| प. ना. | पदार्थनाम । |

| | |
|---|---|
| प. । परि | परिमाणम् । |
| पा. श. | पारिभाषिकशब्दः । |
| पा. सू. | पाणिनिसूत्रम् । |
| प्र. | प्रत्ययः । |
| —प्र.— | प्रथमाह्निकम् । |
| प्रत्या. । प्र. हा. | प्रत्याहारः । |
| प्रा. | प्राणिन् । |
| प्राण्य. | प्राण्यवयवः । |
| मा. वि. | मानवविशेषः । |
| य. | यज्ञसंबन्धि । |
| यज्ञो. | यज्ञोपकरणम् । |
| य. वि. | यज्ञविषयकम् । |
| य. सा. | यज्ञसामुग्री । |
| यु. सा. | युद्धसाहित्यम् । |
| रो. | रोगवाचकः । |
| लो. | लोकः । |
| वन. | वनस्पतिः । |
| वर्ण. | वर्णः । |
| वि. लो. | विशिष्टलोकः । |
| वृ. | वृक्षः । |
| वै. श. | वैदिकशब्दः । |
| —शि.— | शिवसूत्रम् । |
| शि. | शिल्पी । |
| सं. । सं. वा. | संख्यावाचकः । |
| स. ना. | सर्वनाम । |
| संब. । सं. वा. | संबधिवाचकः । |
| स्थ. । स्थ. वा. | स्थलवाचकः । |

# शुद्धिपत्रम् ।

| पृष्ठम् | अशुद्धम् | शुद्धम् |
|---|---|---|
| २०० | हरिद्रा० ( व. न ) | हरिद्रा० ( वन. ) |
| ३०७ | वि ( आद० ) | वि ( आदे. ) |
| ३३९ | जक्ष १७७१ | जक्ष १०७१ |
| ३६१ | अञ्जनागिरि ५०,४. | अञ्जन ५०,४. |
| ३६२ | अनुक्रम् ८५,१६५. | अनुकम् ८५,१५५. |
| ३६५ | अशनि १४,५; | अशनि १८,५; |
| ३७७ | कुक्कुटागिरि ५०,७ | कुक्कुट ५०,७ |
| ३८१ | गद्गद १७,१८ | गद्गद १८,१८. |
| ३८८ | त्सरू | त्सरु |
| ३९१ | धर्मार्थौ १९४,७२. | धर्मार्थौ १९४,२२. |
| ३९२ | नडागिरि ५०,३ | नड |
| | नय १८,२. | नय १८,१२. |
| ३९७ | पिशाच्च | पिशाच |
| ४१८ | शालिक | शालि |
| ४१९ | श्मश्रुकेशी | श्मश्रुकेशौ |
| ४२१ | सकल्लुक | सकल्लक |
| ४२८ | अजातौल्वलि .... | —-२९,३. |
| | अङ्किना .... | अङ्किनी ११,५. |
| ४२९ | कुतप १४,३. | —१४,४. |
| | क्रयाक्रयिका २९,५. | —२९,९. |
| ४३० | पीतविपति | पीतविपीत |
| ४३१ | साहस्र २५,८. | —२२,८. |
| | हलीषा २४,६. | —२८,६. |
| | हेव | हेठ |
| | अंशुक ३६२. | —६२. |
| ४३४ | कुतप ७८. | कुतप ७९. |
| ४३६ | नवनीत १९४. | नवनीत १६४. |
| ४३७ | प्रयुता १४५. | प्रयुत १४५. |
| ४४२ | अदन्य | अघ्न्य |

| पृष्ठम् | अशुद्धम् | शुद्धम् |
|---|---|---|
| ४४३ | अतिथि ४४. | अतिथि ४४२. |
| | अर्म १६१. | अर्थ १६१. |
| | अर्थ ४३२. | अर्म ४३२. |
| | अन्यथिश( पुं. ) ४९. | अन्यथिष( पुं. ) ४९. |
| ४४५ | कुसी | कुसीद |
| | कश | केश |
| ४४७ | चरि( पुं. ) ५७९ | चलि( चरि ) |
| ४४८ | तितड | तितउ |
| | दूरम | दूरम् |
| ४५० | पितु | पीतु |
| ४५१ | भुरिज् ( स्त्री. ) २२१. | —२२०. |
| | भूमि ( पु. ) ५६. | —५६०. |
| ४५३ | वचक्र ( वि. ) ३६१. | वचक्नु |
| | लशन | लशुन |
| ४९६ | अत्यन्तसंयोग च | अत्यन्तसंयोगे च |
| ५२७ | ( टिप्पण्यामन्ते ) यत्र ....तद्ब्रह्म् । | यत्र .... तद्ब्रह्म् । |
| ५४७ | ( टिप्पण्यां चतुर्थपङ्क्तौ ) तस्यो कथन् । | तस्योत्कथनम् । |
| ५५६ | शुण्डिकादिभ्योऽण् ॥ ७३ ॥ | —॥ ७६ ॥ |
| ५८५ | ३ उक्तं वा | ३ उक्तं वा । |
| ६११ | ( टिप्पण्यां चतुर्थपङ्क्तौ )—व | वै. |
| ६२३ | ( टिप्पण्यां ) प. पु. | प. पुस्तके |
| ६४५ | ( टिप्पण्यां ) व. | वै. |
| ६४६ | ( टिप्पण्यां ) रिकादिभ्यः | इरिकादिभ्यः |
| ६८९ | ( ११६ गणे-- )इत्येवमादियो | इत्येवमादयो |
| ६९१ | (१३२) १० पथिन् पन्थ | —पन्थ च |
| ६९७ | (१७१) २१ कृपा कृपेः संप्रसारणं च | कृपा कृपेः संप्रसारणं च |
| ७०१ | कामर्थौ १९४,२२. | कामार्थौ— |